श्री

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननं॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं॥

पंचमे मंडले प्रथमेऽनुवाके पूर्वमष्टौ सूक्तानि व्याख्यातानि। त्वामग्ने हविष्मंत इति सप्तर्चं नवमं सूक्तमात्रेयस्य गयस्यार्षं। सप्तमीपंचम्यौ पंक्ती शिष्टा अनुष्टुभः। अग्निर्देवता। तथा चानुक्रम्यते। त्वामग्ने गयोऽन्त्यापंचम्यौ पंक्ती इति॥ प्रातरनुवाक आश्विनशस्त्रे चाग्नेये क्रतौ इदं सूक्तं शंसनीयं। सूत्रितं च। त्वामग्ने हविष्मंत इति सूक्ते। आ० ४. १३. इति॥

॥ तत्रैषा प्रथमा॥

[redacted]विष्मंतो देवं मर्तास ईडते।
मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक्॥१

त्वां। अग्ने। हविष्मंतः। देवं। मर्तासः। ईडते।
मन्ये। त्वा। जातऽवेदसं। सः। हव्या। वक्षि।
आनुषक्॥१

हे अग्ने त्वां देवं दीप्यमानं हविष्मंतो सोमसाधनहव्ययुक्ता मर्तासो मर्ता ईडते। स्तुवंति। अहं च जातवेदसं। जातप्रज्ञं चराचरं भूतजातं वेत्तीति जातवेदाः। अथवा जातानि ... विंदतीति जातवेदाः। सहा

कानि पापसाधनकर्माणि द्वेषोयुतो न द्वेषयुक्तान् शत्रूनिव तुर्याम। तरेम। वाजयंतः। त्वद्भक्तैस्स्तवैर्धीभिस्स्तुतिभिश्च वाङ्मयांतरयतून् तरेमेत्यर्थः॥ ऊतिभिः। अव रक्षणे। क्तिन्। ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यूठ्। ऊतियूतिजूतिसातिहेतिकीर्तयश्चेत्यंतोदात्तो निपातितः। प्रशस्तिभिः। शंसु स्तुतौ। क्तिन्। कृदुत्तरपदप्रकृतिस्वरापवादत्वेन तादौ च निति कृत्यताविति गतेः प्रकृतिस्वरत्वं। द्वेषोयुतः। द्विष अप्रीतौ। असुन्प्रत्ययः। यु मिश्रणे। कर्तरि क्विप्। तुक्। कृदुत्तरपदप्रकृतिस्वरत्वं। तुर्याम। तॄ प्लवनतरणयोः। प्रार्थनायां लिङ्। यासुट्। लिङः सलोपोऽनंत्यस्येति सकारलोपः। बहुलं छंदसीति शपो लुक्। उदोष्ठ्यपूर्वस्य बहुलं छंदसीत्युत्वं। यासुडागमस्योदात्तत्वाच्छेषनिघातः। अपादादाविति प्रतिषेधान्निघाताभावः॥

## ॥ अथ सप्तमी ॥

तं नो अग्ने अभी नरो रयिं सहस्व आ भर।
स क्षेपयत्स पोषयद्भुवद्वाजस्य सातय उतैधि पृत्सु नो वृधे ॥७

तं। नः। अग्ने। अभि। नरः। रयिं। सहस्वः। आ। भर।
सः। क्षेपयत्। सः। पोषयत्। भुवत्। वाजस्य। सातये।
उत। एधि। पृत्ऽसु। नः। वृधे॥७

हे अग्ने सहस्वो बलवन्नरो हविषां नेतारो नोऽस्माकं तं रयिं लोके प्रसिद्धं पश्वादिलक्षणं धनमभ्याभर धनमस्माभर। आभिमुख्येनाहर। पूर्वोक्तः सोऽग्निः क्षेपयत्। अस्मदीयान् शत्रून् क्षेपयतु। सोऽग्निः पोषयत्। अस्मान्पोषयतु। वाजस्यान्नस्य सातये लाभाय भुवत्। भवतु। उत अपि च हे अग्ने पृत्सु पृतनासु युद्धेषु नोऽस्माकं वृधे वर्धनाय एधि। भव। संग्रामे शत्रुविजयार्थं स त्वं सहायं कुर्वित्यर्थः॥ सहस्वः। षह मर्षणे। असुन् सहत्यनेन शत्रूनिति सहो बलं। मतुप्। मादुपधाया इति मत्वं। मतुवसो रुः संबुद्धौ छंदसीति रुत्वं। आमंत्रितस्य चेति निघातः। क्षेपयत्। क्षिप प्रेरणे। णिजंताल्लेट्। इतश्च लोपः। लेटोऽडाटावित्यडागमः। लघूपधगुणायाहेतौ परस्मैपदं च। पोषयत्। पुष पुष्टौ। भुवत्। भू सत्तायां। भूसुवो-स्तिङीति गुणप्रतिषेधः। उवङ्। एधि। अस भुवि। घ्वसोरेद्धावभ्यासलोपश्चेत्येत्वं।

रद विलेखने । औणादिकः । बहुलं छंदसीति यणो लुक् । पादादित्वान्निघाताभावः । पंथा । द्वितीयैकवचन इतोऽत् सर्वनामस्थान इत्यत् । नकारलोपश्छांदसः । पथिमथोः सर्वनामस्थान इत्याद्युदात्तत्वं ॥

॥ अथ द्वितीया ॥

त्वं नो अग्ने अद्भुत क्रत्वा दक्षस्य मंहना ।
त्वे असुर्य१मारुहत्क्राणा मित्रो न यज्ञियः ॥ २

त्वं । नः । अग्ने । अद्भुत । क्रत्वा । दक्षस्य । मंहना ।
त्वे इति । असुर्यं । आ । अरुहत । क्राणा । मित्रः । न ।
यज्ञियः ॥ २

हे अग्ने अद्भुत सामर्थ्यातिशयेन सर्वेषामाश्चर्यभूत त्वं नोऽस्माकं क्रत्वा कर्मणात्मकेन यज्ञादिव्यापारेण प्रीतः सन् दक्षस्य बलस्य धनस्य वा मंहना मंहनं दानं कुर्विति शेषः । यतः कारणात् त्वय्यसुर्यमसुरत्वं बलमारुहत् आरूढं अतो मित्रो न सूर्य इव यज्ञियो यज्ञार्हस्त्वं क्राणा यज्ञघातकराक्षसापनोदनलक्षणानि कर्माणि कुर्वाणो भव ॥ अद्भुत । आमंत्रितत्वादाद्युदात्तत्वं । क्रत्वा । डुकृञ् करणे । कृञः कतुरिति कतुप्रत्ययः । ककारो गुणवृद्धिप्रतिषेधार्थः । यणादेशः । क्रतुः कर्म । तृतीयैकवचने जसादिषु वावचनमिति वचनान्नाभावाभावः । दक्षस्य । दक्ष गतिहिंसनयोः दक्ष्यंते हिंस्यंतेऽनेन शत्रव इति दक्षं बलं । करणाधिकरणयोश्चेति घञ् । ञित्वादाद्युदात्तः । मंहना । मंहतिर्दानकर्मा । सुपां सुलुगित्याकारादेशः । त्वे । सुपां सुलुगित्यादिना ङेः शेआदेशः । शेआदेशत्वादनुदात्तः । त्वमदः प्रत्ययस्वरेणांतोदात्तः । एकादेश उदात्तेनोदात्त इत्येकादेशस्योदात्तत्वं । आरुहत् । रुहेर्धातोर्लुङि कृमृदृरुहिभ्यश्छंदसीति च्लेरङादेशः । [illegible] । क्राणा । डुकृञ् करणे । शानच् । बहुलं छंदसीति विकरणस्य लुक् । यणादेशः । सुपां सुलुगित्याकारः । चित इत्यंतोदात्तः । यज्ञियः । यज्ञर्त्विग्भ्यां घखञाविति घः । प्रत्ययस्वरेणांतोदात्तः ॥

हे अग्ने अंगिरः। कार्यकारणयोरभेदोपचारादंगिरसां प्रकृतिभूतोऽग्निरंगिरा इत्युच्यते। हे अंगिरः पूर्वैः पुरातनैर्महर्षिभिः स्तुतः स्तवान इदानीतनैश्च स्तूयमानस्त्वं विभ्वासहं महतामप्यभिभवितारं। अभिभवहेतुत्वादभिभवितृ इत्युच्यते। रयिं धनं नोऽस्मभ्यमाभर। आहर। हे होतर्देवानामाह्वातः स्तोतृभ्यो नोऽस्मभ्यं स्तवसे स्तोतुं सामर्थ्यं च प्रयच्छ। उत अपि च पृत्सु युद्धेषु नोऽस्माकं वृधे वर्धनाय एधि। भव॥ स्तवानः। ष्टुञ् स्तुतौ। शानचि कर्मणि व्यत्ययेन शप् प्रत्यय आद्युदात्तश्च। विभ्वासहं। संहितायां विभूनामिति षष्ठीबहुवचनस्य सुपां सुलुगित्यादिना आकारादेशः। सत्सूद्विषेति बहुलमिति वचनात् ण्वुक्। पदकारास्तु विपूर्वात्सहतेर्णमेऽन्येषामपि दृश्यत इति दीर्घत्वं च मत्वावग्रहं कुर्वन्ति। कृदुत्तरपदप्रकृतिस्वरत्वं। स्तवसे। ष्टुञ् स्तुतौ। तुमर्थेऽसेन्प्रत्ययः। नित्त्वादाद्युदात्तः॥

॥ इति पञ्चमस्य प्रथमे द्वितीयो वर्गः॥

जनस्य गोपा इति षडृचमेकादशं सूक्तमात्रेयस्य सुतंभरस्यार्षं जागतमाग्नेयं। तथा चानुक्रान्तं। जनस्य षट् सुतंभरो जागतमिति॥ प्रातरनुवाक आश्विनशस्त्रे चास्य सूक्तस्य विनियोगः। जनस्य गोपास्त्वामग्न ऋतायवः। आ० ४. १३. इति॥

॥ तत्र प्रथमा॥

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः॥ १

जनस्य। गोपाः। अजनिष्ट। जागृविः। अग्निः। सुऽदक्षः। सुऽविताय। नव्यसे।
घृतऽप्रतीकः। बृहता। दिविऽस्पृशा। द्युऽमत्। वि। भाति। भरतेभ्यः। शुचिः॥ १

जनस्य गोपा गोपायिता रक्षिता जागृविर्जागरणशीलः सदा प्रबुद्धः सुदक्षः सुबलः अग्निः इदानीतनः सोऽग्निर्नव्यसे नवतराय सुविताय लोकानां कल्याणायाजनिष्ट। जातः। घृतप्रतीको घृतेन प्रज्वलिताङ्गो बृहता महता दिविस्पृशाद्युवि-

॥ अथ चतुर्थी ॥

अग्निर्नो यज्ञमुप वेतु साधुयाग्निं नरो वि भरन्ते गृहेगृहे ।

अग्निर्दूतो अभवद्धव्यवाहनोऽग्निं वृणाना वृणते कविक्रतुम् ॥ ४

अग्निः । नः । यज्ञं । उप । वेतु । साधुऽया । अग्निं । नरः ।

वि । भरन्ते । गृहेऽगृहे ।

अग्निः । दूतः । अभवत् । हव्यऽवाहनः । अग्निं । वृणानाः ।

वृणते । कविऽक्रतुं ॥ ४

साधुया सर्वपुरुषार्थानां साधकोऽग्निर्नो यज्ञमस्मदीयं यागं प्रत्युपवेतु । आगच्छतु । नरो मनुष्या गृहेगृहे गृहेऽगृहे प्रत्येकमग्निं विभरन्ते । विहरन्ति । विहरणं कुर्वन्तीत्यर्थः । हव्यवाहनो हव्यानां हविषां वोढाग्निर्दूतो देवानां दूतोऽभवत् वृणानाः संभजमानाः यंत कविक्रतुं क्रान्तप्रज्ञमग्निं वृणते । संभजन्ते ॥ साधुया । सुपां सुलुगित्यादिना विभक्तेर्यादेशः ॥

॥ अथ पंचमी ॥

तुभ्येदमग्ने मधुमत्तमं वचस्तुभ्यं मनीषा इयमस्तु शं हृदे ।

त्वां गिरः सिंधुमिवावनीर्महीरा पृणंति शवसा

वर्धयंति च ॥ ५

तुभ्य । इदं । अग्ने । मधुमत्ऽतमं । वचः । तुभ्यं । मनीषा ।

इयं । अस्तु । शं । हृदे ।

त्वां । गिरः । सिंधुंऽइव । अवनीः । महीः । आ ।

पृणंति । शवसा । वर्धयंति । च ॥ ५

हे अग्ने तुभ्य तुभ्यं त्वदर्थं मधुमत्तममत्यंतमधुरमिदं वचः क्रियते। हृदे हृदि शं सुखं कुर्वतीयं मनीषा स्तुतिरस्तु। गिरः स्तुतिरूपा वाचस्त्वामाप्याययंति। पूरयंति। शवसा बलेन वर्धयंति च। कथमिव। महीर्महत्योऽवनीरवन्यो नद्यः सिंधुमिव समुद्रमिव॥

॥ अथ षष्ठी॥

त्वामग्ने अंगिरसो गुहा हितमन्वविंदञ्छिश्रियाणं वनेवने।
स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमंगिरः॥ ६

त्वां। अग्ने। अंगिरसः। गुहा। हितं। अनु। अविंदन्।
शिश्रियाणं। वनेऽवने।
सः। जायसे। मथ्यमानः। सहः। महत्। त्वां। आहुः।
सहसः। पुत्रं। अंगिरः॥ ६

अग्नेऽंगिरस ऋषयो गुहा गुहायां हितं निहितं निगूढं वने वने वृक्षे वृक्षे शिश्रियाणमाश्रितं त्वामन्वविंदन्। अलभंत। मथनकृता सहः सहसा बलेन युक्तः स त्वं मथ्यमानो जायसे। हे अंगिरोऽंगिरसां प्रकृतिभूतस्त्वां सहसः पुत्रमाहुः॥ शिश्रियाणं। श्रिञ् सेवायां। लिटः कानच्। अपः श्लुः। आमिति द्विर्वचनं। इयङादेशः। चितादंतोदात्त.॥

॥ इति चतुर्थस्य प्रथमे तृतीयो वर्गः॥

प्राग्नये बृहत इति षड्चं द्वादशं सूक्तं सुतंभरस्यार्षं त्रैष्टुभमाग्नेयं। प्राग्नय इत्यनुक्रांतं॥ प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे चेदं सूक्तं विनियुक्तं। सूत्रितं च। प्राग्नये बृहते प्र वेधसे। आ० ४, १३,। इति॥

॥ तत्र प्रथमा॥

प्राग्नये बृहते यज्ञियाय ऋतस्य वृष्णे असुराय मन्म।
घृतं न यज्ञ आस्ये सुपूतं गिरं भरे वृषभाय प्रतीचीं॥ १

प्र। अग्नये। बृहते। यज्ञियाय। ऋतस्य। वृष्णे। असुराय। मन्म।
घृतं। न। यज्ञे। आस्ये। सुऽपूतं। गिरं। भरे। वृषभाय। प्रतीचीं॥ १

बृहते सामर्थ्यातिशयेन महते यज्ञियाय यज्ञार्हाय ऋतस्योदकस्य वृष्णे वर्षित्रे। ऋतमित्युदकनामसु पाठात्। असुराय। बलवते॥ असेरौणादिक उरन्प्रत्ययः॥ वृषभाय कामानां वर्षित्रेऽग्नये मन्म ज्ञानसाधनं प्रतीचीमभिमुखीं गिरं स्तुतिरूपां वाचं प्रभरे। प्रणयामि। कथमिव। सुपूतं सम्यक्शुद्धमास्ये प्रक्षिप्तं यज्ञे घृतं न घृतमिव। आस्ये प्रक्षिप्तं घृतं यथा प्रीतिकरं भवति तथा प्रीतिकरीं स्तुतिमित्यर्थः॥

॥ अथ द्वितीया॥

ऋतं चिकित्व ऋतमिच्चिकिद्ध्यृतस्य धारा अनु तृन्धि पूर्वीः।
नाहं यातुं सहसा न द्वयेन ऋतं सपाम्यरुषस्य वृष्णः॥ २

ऋतं। चिकित्वः। ऋतं। इत्। चिकिद्धि। ऋतस्य। धाराः। अनु। तृन्धि। पूर्वीः।
न। अहं। यातुं। सहसा। न। द्वयेन। ऋतं। सपामि। अरुषस्य। वृष्णः॥ २

ऋतं स्तोत्रं हे चिकित्वो ज्ञानवन्नग्ने त्वं ऋतं मया क्रियमाणमिदं स्तोत्रं चिकिद्धि। जानीहि॥ कित ज्ञाने। जुहोत्यादिः। लोटि रूपं। इदिति पूरणः। ऋतमिति पदस्य परस्मिन्नार्षत्विते विद्यमानेऽपि छांदसत्वात्पराङ्गवद्भावाभावः॥ किंच पूर्वीर्बह्वीरृतस्योदकस्य धारास्तस्य प्रीणयितृत्वाद्यनुतृंधि। मेघाननुविध्य। सहसा बलेन युक्तोऽहं यातुं कर्मणां मायकरां हिंसां न सपामि। न स्पृशामि। न

करोमीति यावत् । द्वयेन च सत्यानृताभ्यां यत्किंचिदवैदिकं तत्सर्वं न सपामि ॥ षप समवाय इति धातुः ॥ किंच अरुषस्य रोचमानस्य वृष्णः कामानां वर्षितुरग्नेः व्रतं श्रौतमेव सपामि ॥

॥ अथ तृतीया ॥

कथा नो अग्न ऋतयन्नृतेन भुवो नवेदा उचथस्य नव्यः ।

वेदा मे देव ऋतुपा ऋतूनां नाहं पतिं सनितुरस्य रायः ॥ ३

कथा । नः । अग्ने । ऋतयन् । ऋतेन । भुवः । नवेदाः ।

उचथस्य । नव्यः ।

वेद । मे । देवः । ऋतुऽपाः । ऋतूनां । न । अहं । पतिं ।

सनितुः । अस्य । रायः ॥ ३

हे अग्ने ऋतयन् सर्वप्राणिनां जीवनहेतुकमुदकं कुर्वन् कथा केनाप्यृतेन सत्येन क्रियमाणेन कर्मणा नः उचथस्यास्मदीयस्य स्तोत्रस्य नवेदा भुवः । भवेः । नव्यः स्तुत्य ऋतूनां ऋतुपाः । द्वितीय ऋतशब्दोऽनुवादकः । देवो द्योतमानोऽग्निर्मां वेद । वेत्तु । सनितुर्भजमानस्यास्य मम रायः पश्वादिलक्षणस्य पतिं स्वामिनं तमग्निमहं न जानामि ॥ भुवः । भू सत्तायां लिङर्थे लेट्यडागमः । उपश्लेषः । नवेदाः । न न वेत्तीति वेत्तीत्यस्मिन्नर्थे वर्तते । कथमेतल्लभ्यते । निपातनात् । द्विनञ्पूर्वस्यासुन्प्रत्ययान्तस्य वेदेरेकस्य नञो लोपोऽन्यस्य प्रकृतिभावश्च छान्दसाभिमा निपातितः । पाणिनिना तु नभ्राण्नपादिति सूत्रेण वेत्तीत्येतस्मिन्नर्थे निपातितः । अत्रार्थस्यानुपपन्नत्वात् छान्दसनिपात एवाश्रीयते ॥

॥ अथ चतुर्थी ॥

के ते अग्ने रिपवे बन्धनासः के पायवः सनिषन्त द्युमन्तः ।

के धासिमग्ने अनृतस्य पान्ति क आसतो वचसः सन्ति

गोपाः ॥ ४

के। ते। अग्ने। रिपवे। बंधनासः। के। पायवः।

सनिषंत। द्युऽमंतः।

के। धासिं। अग्ने। अनृतस्य। पांति। के। असंतः।

वचसः। संति। गोपाः॥ ४

हे अग्ने ते रिपवे त्वदीयस्य शत्रोः बंधनासो बंधकाः स्तुत्ये त्वदर्थं विस्तृते पुरुषाः के कीदृशाः। सामर्थ्यातिशयाद्देवविधा इति केनापि ज्ञातुं न शक्यंत इत्यर्थः। ये पायवो जनानां रक्षितारो द्युमंतो दीप्तिमंतः सनिषंत होमेभ्यो धनं प्रयच्छंति त्वदीयाः के कीदृशाः। येऽनृतस्यासत्यस्य धासिं धारकं अन्नं पांति रक्षंति ते त्वदीया जनाः के संति। न केऽपीत्यर्थः। येऽसतो दुष्टस्याभिशापादि-लक्षणस्य वचसो गोपा गोपायितारो रक्षितारस्ते त्वदीयाःके संति। न कोऽपीत्यर्थः। अथवा ये के जना रिपोर्बंधकाः। ये के पायवो रक्षितारः सनिषंत धनं प्रयच्छंति द्युमंतः। ये केऽनृतस्यासत्यस्य धासिं धारकं अन्नं पांति अन्नृतजनितपापात्परिहृत्य सन्मार्गप्रदानेन रक्षंति। ये केऽसतोऽभिशापादिलक्षणाद्वचसो गोपायितारः संति ते सर्वे त्वदीयाः। त्वदुपासका इत्यर्थः॥

॥ अथ पंचमी ॥

सखायस्ते विषुणा अग्न एते शिवासः संतो अशिवा अभूवन्।

अधूर्षत स्वयमेते वचोभिर्ऋजूयते वृजिनानि ब्रुवंतः॥ ५

सखायः। ते। विषुणाः। अग्ने। एते। शिवासः। संतः।

अशिवाः। अभूवन्।

अधूर्षत। स्वयं। एते। वचःऽभिः। ऋजुऽयते। वृजिनानि।

ब्रुवंतः॥ ५

हे अग्ने तव सखायः स्तोतारो विषुणा विप्रकीर्णाः सर्वत्र व्याप्ता एते पूर्वमविषयाः परनिंदादिकुर्वाणास्त्वत्परिचर्यां त्यक्तवंतोऽभक्ताः संत इदानीं त्वत्परिचर्यां कुर्वंत शिवासः शिवा व्याप्ता अभूवन्। किंच य ऋजूयत ऋजु सन्मार्गमाचरतेऽपि मह्यं वचो-

भिरसाधूक्तिभिर्वृजिनानि कुटिलानि कुर्वंतस्त एते मम सपत्नाः स्वयमेवाभूवंस्त। अहिंसंत। भूवंतेर्हिंसाकर्मण इदं रूपं॥

॥ अथ षष्ठी ॥

यस्ते॑ अग्ने॒ नम॑सा य॒ज्ञमीट्ट॑ ऋ॒तं स पा॑त्यरु॒षस्य॒ वृष्णः॑।

तस्य॒ क्षयः॑ पृ॒थुरा सा॒धुरे॑तु प्र॒सर्स्रा॑णस्य॒ नहु॑षस्य॒ शेषः॑॥ ६

यः। ते॒। अ॒ग्ने॒। नम॑सा। य॒ज्ञं। ईट्टे॑। ऋ॒तं। सः।

पा॒ति॒। अ॒रु॒षस्य॑। वृष्णः॑।

तस्य॑। क्षयः॑। पृ॒थुः। आ। सा॒धुः। ए॒तु॒। प्र॒ऽसर्स्रा॑णस्य।

नहु॑षस्य। शेषः॑॥ ६

हे अग्ने यो मनुष्यो यज्ञं यजनीयं ते त्वां नमसा स्तोत्रेणेट्टे स्तौति। यद्वा ते तुभ्यं यज्ञं यागं नमसान्नरूपेण हविषेट्टे यजति॥ अस्मिन् पक्षे यजेर्बहुलं छंदसीति शपः लुक्। व्रश्चेति षत्वं। ष्टुत्वं। बहुलं छंदसीति संप्रसारणं। सवर्णदीर्घः। जकारस्य डकारः॥ अरुषस्य रोचमानस्य वृष्णः कामानां वर्षितुस्तस्यर्तं स्तोत्रं पाति रक्षति तस्य यजमानस्य क्षयो गृहं पृथुर्विस्तीर्णं भवति। पश्वादिलक्षणैर्धनैः संपूर्णं भवतीत्यर्थः। प्रसर्स्राणस्य प्रकर्षेण परिचर्यां गच्छतो नहुषस्य मनुष्यस्य साधुः कामानां साधकः शेषः। शिष्यत इति शेषः। पुत्र एतु। आगच्छतु। भवत्वित्यर्थः॥

॥ इति चतुर्थस्य प्रथमे चतुर्थो वर्गः ॥

अर्चंतस्त्वेति षड़्चं त्रयोदशं सूक्तं सुतंभरस्यार्षं गायत्रमाग्नेयं। अनुक्रांतं च। अर्चंतो गायत्रं त्विति॥ प्रातरनुवाक आग्नेयक्रतौ गायत्रे छंदस्याश्विनशस्त्रे च इदमादिके द्वे सूक्ते। सूत्रितं च। अर्चंतस्त्वेति सूक्ते। आ० ४. १३.। इति॥ आश्वमीयोपस्थाने त्वमग्ने सप्रथा असीत्येका। सूत्रितं च। सं नः सृज सुमत्या वाजवत्या त्वमग्ने सप्रथा असीत्येका। सूत्रितं च। सं नः सृज सुमत्या वाजवत्या त्वमग्ने सप्रथा असीति च। आ० ३. १०.। इति॥ अश्वमेधे पौष्णेष्टौ त्वमग्ने सप्रथा इति प्रथमस्याज्यभागस्यानुवाक्या। त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति खंडौ। आ० १०. ६.। इति॥

॥ तत्र प्रथमा ॥

अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि ।

अग्ने अर्चन्त ऊतये ॥ १

अर्चन्तः । त्वा । हवामहे । अर्चन्तः । सं । इधीमहि ।

अग्ने । अर्चन्तः । ऊतये ॥ १

हे अग्ने त्वा त्वामर्चन्तः पूजयन्तो वयं हवामहे । आह्वयामः । अर्चन्तः स्तुवन्तो वयमूतये रक्षणाय तर्पणाय वा त्वां समिधीमहि । समिन्धः संदीपयामः । अर्चन्त इति तृतीयं पदमादरातिशयार्थं ॥

॥ अथ द्वितीया ॥

अग्नेः स्तोमं मनामहे सिध्रमद्य दिविस्पृशः ।

देवस्य द्रविणस्यवः ॥ २

अग्नेः । स्तोमं । मनामहे । सिध्रं । अद्य । दिविऽस्पृशः ।

देवस्य । द्रविणस्यवः ॥ २

द्रविणस्यवो द्रविणं धनमिच्छन्तो वयं दिविस्पृशः स्वर्गं आकाशं व्याप्नुवतो देवस्य द्योतमानस्याग्नेः सिध्रं पुरुषार्थानां साधकं स्तोमं स्तोत्रमद्यास्मिन्दिने मनामहे । ब्रूमः ॥

॥ अथ तृतीया ॥

अग्निर्जुषत नो गिरो होता यो मानुषेष्वा ।

स यक्षद्दैव्यं जनं ॥ ३

अग्निः । जुषत । नः । गिरः । होता । यः । मानुषेषु । आ ।

सः । यक्षत् । दैव्यं । जनं ॥ ३

होता देवानामाह्वाता सोऽग्निरस्तोतृभ्यो वदति सोऽग्निरस्माकं गिरः शृणोतु। देवता। सोऽग्निरेवं मनं देवसंबंधिनं जनं यच्छतु। वहतु॥

॥ अथ चतुर्थी ॥

त्वम॑ग्ने सप्रथा॑ असि॒ जुष्टो॒ होता॒ वरे॑ण्यः।

त्वया॑ यज्ञं वि त॑न्वते॥ ४

त्वं। अग्ने॑। सऽप्रथाः॑। असि। जुष्टः॑। होता॑। वरे॑ण्यः।

त्वया॑। यज्ञं॑। वि। तन्वते॥ ४

हे अग्ने जुष्टः सर्वदा प्रीतो वरेण्यः सर्वैर्वरणीयो होता त्वं सप्रथाः सर्वतः पृथुरसि। भवसि। तथाच यास्कः। सप्रथाः सर्वतः पृथुः। नि० ६. ७.। इति। किंच सर्वे यजमानास्त्वया साधनेन यज्ञं वितन्वते॥

॥ अथ पंचमी ॥

त्वाम॑ग्ने वाजसात॑मं विप्रा॑ वर्धंति सुष्टु॑तं।

स नो॑ रास्व सुवीर्यं॑॥ ५

त्वां। अग्ने॑। वाजऽसात॑मं। विप्राः॑। वर्धंति। सुऽस्तु॑तं।

सः नः। रास्व। सुऽवीर्यं॑॥ ५

हे अग्ने विप्रा मेधाविनः स्तोतारो वाजसातमं। वाजोऽन्नं। तद्दतं सुष्टुतं पूर्वैर्महर्षिभिः सम्यक् स्तुतं तं त्वां वर्धंति। स्तोत्रैर्वर्धंतंति। स त्वं नोऽस्माभ्यं सुवीर्यं सर्वैः श्लाघनीयं बलं रास्व। देहि॥

॥ अथ षष्ठी ॥

अग्ने॑ नेमिर॒राँ इ॑व दे॒वाँस्त्वं प॑रि॒भूर॑सि।

आ राध॑श्चित्रमृ॑ञ्जसे॥ ६

अग्ने॑। नेमिः॑। अ॒राँ॒ऽइ॑व दे॒वान्। त्वं। प॒रि॒ऽभूः। अ॒सि॒।

आ। राधः॑। चि॒त्रं। ऋ॒ञ्ज॒से॒ ॥ ६

हे अग्ने त्वं देवान् परिभूरसि। स्वतेजसा परिभवसि। कथमिव। नेमिः प्रकाशमानचक्रस्य बाह्यो वलयोऽरानिव नाभ्यर्पितान् सूक्ष्मान् स्वाश्रकानिव। किंच त्वं चित्रं नानाविधं राधः। साधयत्यनेन पुरुषार्थानिति राधो धनं। आ ऋंजसे। स्तोतृभ्यः प्रसाधय। धननामसु पाठाद्राधो धनमित्युक्तं॥

॥ इति चतुर्थस्य प्रथमे पंचमो वर्गः ॥

अग्निं स्तोमेनेति षडृचं चतुर्दशं सूक्तं सुतंभराख्यमार्षं गायत्रमाग्नेयं। अग्निं स्तोमेनेत्यनुक्रमणिका॥ प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः॥

॥ तत्र प्रथमा ॥

अ॒ग्निं स्तोमे॑न बोधय समिधा॒नो अम॑र्त्यं।

ह॒व्या दे॒वेषु॑ नो दधत् ॥ १

अ॒ग्निं। स्तोमे॑न। बो॒ध॒य॒। स॒म्ऽइ॒धा॒नः। अम॑र्त्यं।

ह॒व्या। दे॒वेषु॑। नः॒। द॒ध॒त् ॥ १

हे स्तोतरमर्त्यममरणधर्माणमग्निं स्तोमेन स्तोत्रेण बोधय। स्वाभिमतार्थसिद्धये प्रबोधय। योऽग्निः समिधानः स्तोत्रैः सम्यक् प्रकाशमानः स नो हव्यास्मदीयानि हव्यानि हवींषि देवेषु दधत्। निदधातु॥

॥ अथ द्वितीया ॥

तम॑ध्व॒रेष्वी॑ळते दे॒वं मर्ता॒ अम॑र्त्यं।

यजि॑ष्ठं॒ मानु॑षे॒ जने॑ ।

तं। अ॒ध्व॒रेषु॑। ई॒ळ॒ते॒। दे॒वं। मर्ताः॑। अम॑र्त्यं।

यजि॑ष्ठं। मानु॑षे। जने॑ ॥ २

अतो मनुष्या देवं द्योतमानममर्त्यंमरणधर्मोभ्यं मानुषे मनुष्याणां संबंधिनि जने
लोके यजिष्टं यष्टृतमं तमग्निमध्वरेषु यज्ञेषु ईडते । स्तुवंति ॥

॥ अथ तृतीया ॥

तं हि शश्वंत ईडते स्रुचा देवं घृतश्चुता ।

अग्निं हव्याय वोळ्हवे ॥ ३

तं । हि । शश्वंतः । ईडते । स्रुचा । देवं । घृतऽश्चुता ।

अग्निं । हव्याय । वोळ्हवे ॥ ३

शश्वंतो बहवः स्तोतारस्तं देवमग्निमीडते । स्तुवंति । कीदृशास्ते । घृतश्चुता
घृतं क्षरंत्या स्रुचा सहिताः । किमर्थं स्तुवंति । हव्याय हव्यमर्हनार्थं यद्वपुरोडा-
शादिलक्षणं हविर्वोढवे वोढुं ॥

॥ अथ चतुर्थी ॥

अग्निर्जातो अरोचत घ्नन्दस्यून् ज्योतिषा तमः ।

अविंदद्गा अपः स्वः ।

अग्निः । जातः । अरोचत । घ्नन् । दस्यून् । ज्योतिषा । तमः ।

अविंदत् । गाः । अपः । स्वरिति स्वः ॥ ४

जातोऽरण्योर्मंथनेन प्रादुर्भूतोऽग्निर्दस्यून् यज्ञविघ्नकारिणः शत्रून् घ्नन् हिंसन्
ज्योतिषा स्वेन तेजसा तमो घ्नन्नरोचत । अदीप्यत । किंच गा अप उदकानि स्वः
स्वर्गं चाविंदत् । अवेदयत् ॥

॥ अथ पंचमी ॥

अग्निमीळेन्यं कविं घृतपृष्ठं सपर्यत ॥

वेतु मे शृणवद्धवं ॥ ५

अग्निं । ईळेन्यं । कविं । घृतऽपृष्ठं । सपर्यत ।

वेतु । मे । शृणवत् । हवं ॥ ५

हे जना ईळेन्यं स्तुत्यं कविं क्रांतदर्शिनं घृतपृष्ठं दीप्तोपरिभागमग्निं सपर्यत । पूजयत । सोऽग्निर्मे हवं मदीयमाह्वानं वेतु । कामयतां । शृणवत् शृणोतु च ॥

॥ अथ षष्ठी ॥

अग्निं घृतेन वावृधुः स्तोमेभिर्विश्वचर्षणिं ।

स्वाधीभिर्वचस्युभिः ॥ ६

अग्निं । घृतेन । ववृधुः । स्तोमेभिः । विश्वऽचर्षणिं ।

सुऽआधीभिः । वचस्युऽभिः ॥ ६

ऋत्विजो विश्वचर्षणिं विश्वस्य द्रष्टारं स्वाधीभिः शोभनाध्यानैर्वचस्युभिः स्तुतिकामैर्देवैः समेतमग्निं घृतेन स्तोमेभिः स्तोमैः स्तोत्रैर्ववृधुः । अवर्धयन् ॥

॥ इति चतुर्थस्य प्रथमे षष्ठो वर्गः ॥

॥ इति पंचमे मंडले प्रथमोऽनुवाकः ॥

द्वितीयेऽनुवाके दश सूक्तानि । तत्र प्र वेधस इति पंचर्चं प्रथमं सूक्तमांगिरसस्य धरुणस्यार्षं त्रैष्टुभमाग्नेयं । अत्रानुक्रमणिका । प्र वेधसे पंचांगिरसो धरुण इति ॥ प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे चेदं सूक्तं । सूत्रितं च । प्र वेधसे कवये त्वं नो अग्ने वरुणस्य विद्वान् । आ० ४, १३, । इति ॥

॥ तत्रेयं प्रथमा ॥

प्र वेधसे कवये वेद्याय गिरं भरे यशसे पूर्व्याय ।

घृतप्रसत्तो असुरः सुशेवो रायो धर्ता धरुणो वस्वो

अग्निः ॥ १

प्र। वेधसे। कवये। वेद्याय। गिरं। भरे। यशसे।

पूर्व्याय।

घृतऽप्रसत्तः। असुरः। सुऽशेवः। रायः। धर्ता। धरुणः।

वस्वः। अग्निः॥ १

योऽग्निर्घृतप्रसत्तो हवीरूपेण घृतेन प्रसन्नोऽसुरो बलवान् सुशेवः। शोभनं शेवं सुखं यस्मात्सो सुशेवः शेवमिति सुखनामसु पाठात्। रायो धनस्य धर्ता पोषको धरुणो हविषां धारको वस्वो वासकोऽग्निर्भवति वेधसे विधात्रे कवये क्रांतदर्शिने वेद्याय स्तुत्याय। विदिरयं जनिना समानार्थो जनिश्च स्तुतिकर्मा। यशसे यशस्विने पूर्व्याय मुख्याय तस्मा अग्नये गिरं स्तुतिं प्रभरे। प्रयच्छामि॥

॥ अथ द्वितीया॥

ऋतेन ऋतं धरुणं धारयंत यज्ञस्य शाके परमे व्योमन्।

दिवो धर्मन्धरुणे सेदुषो नॄञ्जातैरजाताँ अभि ये ननक्षुः॥ २

ऋतेन। ऋतं। धरुणं। धारयंत। यज्ञस्य। शाके। परमे।

विऽओमन्।

दिवः। धर्मन्। धरुणे। सेदुषः। नॄन्। जातैः।

अजातान्। अभि। ये। ननक्षुः॥ २

ये यजमाना दिवो द्युलोकस्य धरुणे धारके धर्मन्धर्मणि सेदुष आसीनान् नॄन्जातान्देवान् जातैर्मनुष्यैः स्तुतिभिरभिननक्षुः अभिप्राप्नुवंति ते यजमाना यज्ञस्य धरुणं धारकमृतं सत्यरूपमग्निं शाके कर्माणि निमित्ते परम उत्कृष्टे व्योमन् स्थाने उत्तरवेद्याख्ये ऋतेन स्तोत्रेण च धारयंत। धारयंति॥

॥ अथ तृतीया ॥

अंहोयुवस्तन्वस्तन्वते वि वयो महद्दुष्टरं पूर्व्याय ।
स संवतो नवजातस्तुतुर्यात्सिंहं न क्रुद्धमभितः परि ष्ठुः ॥ ३

अंहःऽयुवः । तन्वः । तन्वते । वि । वयः । महत् । दुस्तरं ।
पूर्व्याय ।
सः । संऽवतः । नवऽजातः । तुतुर्यात् । सिंहं । न । क्रुद्धं ।
अभितः । परि । स्थुः ॥ ३

हे यजमानाः पूर्व्याय मुख्यायास्मा अग्नये महदधिकं दुष्टरं राक्षसैर्दुःप्रापं वयो हवोलक्षणमन्नं प्रयच्छंति ते यजमानास्तन्वः स्वात्मनूरंहोयुवोऽंहसां वियोजिका वितन्वते । विस्तारयंति । नवजातः सोऽग्निः संवतः संगतान् शत्रून् तुतुर्यात् । तरतु । किंचाभितः सर्वतो वर्तमानाः शत्रवो मां परिवर्जयित्वा स्थुः । तिष्ठेयुः । कथमिव । मृगाः क्रुद्धं सिंहं न सिंहमिव ॥

॥ अथ चतुर्थी ॥

मातेव यद्भरसे पप्रथानो जनंजनं धायसे चक्षसे च ।
वयोवयो जरसे यद्दधानः परि त्मना विषुरूपो जिगासि ॥ ४

माताऽइव । यत् । भरसे । पप्रथानः । जनंऽजनं । धायसे ।
चक्षसे । च ।
वयःऽवयः । जरसे । यत् । दधानः । परि । त्मना ।
विषुऽरूपः । जिगासि ॥ ४

पप्रथानः सर्वत्र प्रथमानो यद्यस्त्वं मातेव जननीव जनं जनं सर्वं जनं भरसे बिभर्षि । किंच धायसे धारणाय चक्षसे दर्शनाय च सर्वैः प्रार्थ्यसे । यद्यदा दधानो

दधानो धार्यमाणो भवति तदा महो महः सर्वमन्नं अरते । गच्छति । अपि च विषुरूपो नानारूपः सन् त्मना आत्मना परिज्मा । परिगन्ता । सर्वभूतानि परिगच्छति ॥

॥ अथ पंचमी ॥

वाजो नु ते शवसस्पात्वन्तमुरुं दोघं धरुणं देव रायः ।
पदं न तायुर्गुहा दधानो महो राये चितयन्नत्रिमस्पः ॥ ५

वाजः । नु । ते । शवसः । पातु । अन्तं । उरुं । दोघं । धरुणं । देव । रायः ।
पदं । न । तायुः । गुहा । दधानः । महः । राये । चितयन् । अत्रिं । अस्परित्यस्पः ॥ ५

हे देव द्योतमानाग्ने उरुं पृथुं दोघं कामानां दोग्धारं रायो धनस्य धरुणं धारकं वाजो हविर्लक्षणमन्नं ते त्वदीयस्य शवसो बलस्यान्तं समाप्तिं संपूर्तिं नु अद्य पातु । रक्षतु । तायुर्न तस्करो यथा गुहायां पदं स्थानं दधानो धारयन् रक्षति तद्वत् महो महते राये धनाय धनलाभार्थं चितयन् सन्मार्गं प्रकाशयन् अत्रिमस्पः । अत्रिमृषिमप्रीणयः । स्पृ प्रीणनपालनयोरिति धातुः ॥

॥ इति चतुर्थस्य प्रथमे सप्तमो वर्गः ॥

बळृत्था इति पंचर्चं द्वितीयं सूक्तमात्रेयस्य पुरोरार्षं । अंत्या पंक्तिः शिष्टा अनुष्टुभः । अग्निर्देवता । तथा चानुक्रांतं । बळृत्थाः पंचांतं पंक्तीति ॥ प्रातरनुवाक आग्नेये क्रतावानुष्टुभे छंदस्याश्विनशस्त्रे चेदमादीनि दश सूक्तानि चतुर्थनवमवर्जितानि । आदितस्त्विषु सूक्तेष्वंत्यास्त्यजेत् । तथा च सूत्रितं । बळृत्था इति दशानां चतुर्थनवमे उद्धरेदुत्तमासूत्तमा आदितस्तिसृणां । आ० ४. १३. इति ॥

॥ तत्रेयं प्रथमा ॥

बळृत्था हि भानवेऽर्चा देवायाग्नये ।
यं मित्रं न प्रशस्तिभिर्मर्तासो दधिरे पुरः ॥ १

बृहत्। वयः। हि। भानवे। अर्च। देवाय। अग्नये।
यं। मित्रं। न। प्रशस्तिऽभिः। मर्तासः। दधिरे। पुरः॥ १

वयो भानवे दीप्तिमतेऽग्नये बृहद्वयो हवीरूपमन्नं दीयते हि। अतस्त्वमपि देवाय द्योतमानायाग्नये वयोऽर्च। प्रयच्छ। मर्तासो मनुष्या यमग्निं मित्रं न सखायमिव प्रशस्तिभिः प्रकृष्टाभिः स्तुतिभिः पुरो दधिरे पुरस्कुर्वन्ति॥

॥ अथ द्वितीया॥

स हि द्युभिर्जनानां होता दक्षस्य बाह्वोः।
वि हव्यमग्निरानुषग्भगो न वारमृण्वति॥ २

सः। हि। द्युऽभिः। जनानां। होता। दक्षस्य। बाह्वोः।
वि। हव्यं। अग्निः। आनुषक्। भगः। न। वारं।
ऋण्वति॥ २

योऽग्निर्हव्यं हविर्देवेभ्यानुषक् देवेष्वनुषक्तं करोति बाह्वोर्भुजयोर्दक्षस्य बलस्य द्युभिर्द्युतिभिर्युक्तः सोऽग्निर्जनानां यजमानानां होता देवानामाह्वाता भवति। भगो न सूर्य इव वारं वरणीयं धनं व्यृण्वति। विशेषेण प्रयच्छति मनुष्येषु॥

॥ अथ तृतीया॥

अस्य स्तोमे मघोनः सख्ये वृद्धशोचिषः।
विश्वा यस्मिन्तुविष्वणि समर्ये शुष्ममादधुः॥ ३

अस्य। स्तोमे। मघोनः। सख्ये। वृद्धऽशोचिषः।
विश्वा। यस्मिन्। तुविऽस्वनि। सं। अर्ये। शुष्मं। आऽदधुः॥ ३

मघोनो मघवतो धनवतो वृद्धशोचिषः। वृद्धानि शोचींषि तेजांसि यस्यासौ वृद्धशोचिः। तस्यैवंविधस्याग्नेः स्तोमे स्तोत्रे सख्ये च स्याम। तुविष्वणि बहुशब्देऽर्ये स्वामिनि यस्मिन्नग्नौ विश्वा॥ सुपां सुलुगिति डादेशः॥ विश्वे सर्व ऋत्विजः शुष्मं बलं हविर्भिः स्तोत्रैश्च समादधुः सम्यगादधति॥

॥ अथ चतुर्थी ॥

अधा ह्यग्न एषां सुवीर्यस्य मंहना ।

तमिद्यह्वं न रोदसी परि श्रवो बभूवतुः ॥ ४

अध । हि । अग्ने । एषां । सुऽवीर्यस्य । मंहना ।

तं । इत् । यह्वं । न । रोदसी इति । परि । श्रवः ।

बभूवतुः ॥ ४

हे अग्ने अध अथैषामस्माकं यजमानानां सुवीर्यस्य सर्वैः स्पृहणीयस्य बलस्य मंहना मंहनायै दानाय भव ॥ मंहतिर्दानकर्मा ॥ रोदसी द्यावापृथिव्यौ यह्वं न महांतं पुत्रमिव श्रवः सर्वैः श्रवणीयं तमित्तमग्निमेव परिबभूवतुः । परिगृह्णीतः ॥

॥ अथ पंचमी ॥

नू न एहि वार्यमग्ने गृणान आ भर ।

ये वयं ये च सूरयः स्वस्ति धामहे सचोतैधि पृत्सु नो वृधे ॥ ५

नु । नः । आ । इहि । वार्यं । अग्ने । गृणानः । आ । भर ।

ये । वयं । ये । च । सूरयः । स्वस्ति । धामहे । सचा ।

उत । एधि । पृत्ऽसु । नः । वृधे ॥ ५

हे अग्ने गृणानः स्तूयमानः सन् नु क्षिप्रमेहि । यज्ञं प्रत्यागच्छ । आगत्य च ऽस्मभ्यं वार्यं वरणीयं धनमाभर । संपादय । ये वयं यजमाना ये च सूरयः स्तोतारः सचा ऋत्विग्भिः सहिता उभे ये वयं स्वस्ति स्तोत्रं धामहे । कुर्मः । उत अपि च पृत्सु पृतनासु नोऽस्माकं वृधे वर्धनाय एधि । भव ॥

॥ इति चतुर्थस्य प्रथमेऽष्टमो वर्गः ॥

आ यज्ञैरिति पंचर्चं सप्तमं सूक्तमाग्नेयस्य पुरोडाशस्याग्नेयं । अंत्या पंक्तिः शिष्टा पंक्त्यंतपरिभाषयानुष्टुभः । आ यज्ञैरित्यनुक्रमणिका ॥ अंत्यावर्जं प्रातरनु-वाकाश्विनशस्त्रयोर्नुष्टुभ इत्यादिदशखंडमध्ये विनियोग उक्तः ॥

तत्रेयं प्रथमा ॥

आ यज्ञैर्देव मर्त्य इत्था तव्यांसमूतये ।

अग्निं कृते स्वध्वरे पूरुरीळीतावसे ॥ १

आ । यज्ञैः । देव । मर्त्यः । इत्था । तव्यांसं । ऊतये ।

अग्निं । कृते । सुऽअध्वरे । पूरुः । ईळीत । अवसे ॥ १

हे देव मर्त्यो मनुष्य ऋत्विगित्थेत्थं तव्यांसं प्रवृद्धमग्निमूतये तर्पणाय यज्ञैः स्तोत्रैराह्वयति । किंच पूरुर्मनुष्यः स्तोता कृते स्वध्वरे शोभने क्रतौ तमग्निमवसे रक्षणायेळीत । स्तौति ॥

॥ अथ द्वितीया ॥

अस्य हि स्वयशस्तर आसा विधर्मन्मन्यसे ।

तं नाकं चित्रशोचिषं मन्द्रं परो मनीषया ॥ २

अस्य । हि । स्वयशःऽतरः । आसा । विऽधर्मन् । मन्यसे ।

तं । नाकं । चित्रऽशोचिषं । मन्द्रं । परः । मनीषया ॥ २

हे विधर्मन् । विविधो धर्मो यस्यासौ विधर्मा स्तोता । तस्य संबोधनं । हे स्तोतः स्वयशस्तरः स्वयशसां मध्येऽतिशयेन स्वयशास्त्वं मनीषया महत्या बुद्ध्या साधनेन प्रसिद्धमस्यास्य ह्यग्निमासास्येन भाषा मन्यसे । स्तौषि । किंविशिष्टमग्निं । नाकं सुखं । अकं दुःखं । न विद्यतेऽकं यस्य सः । तं चित्रशोचिषं चित्रतेजसं मन्द्रं स्तुत्यं परः परस्तात्स्थितं ॥

॥ अथ तृतीया ॥

अस्य वासा उ अर्चिषा य आयुक्त तुजा गिरा ।

दिवो न यस्य रेतसा बृहच्छोचन्त्यर्चयः ॥ ३

अस्य। वै। असौ। ऊं इति। अर्चिषा। यः। अयुक्त। तुजा। गिरा।

दिवः। न। यस्य। रेतसा। बृहत्। शोचंति। अर्चयः॥ ३

योऽग्निस्तुजा जगद्व्यापनसमर्थेन बलेन गिरा स्तुत्यायुक्त संबद्धो भवति दिवो न द्योतमानस्यादित्यस्येव यस्याग्ने रेतसा प्रभया कृत्स्नं जगद्व्याप्तं यस्याग्नेर्बृहद्बृंहितोऽर्चयो दीप्तयः शोचंति प्रकाशंते अस्य वै असावग्निरर्चिषा प्रभयासावादित्योऽर्चिष्मान्भवति। उ इति पूरणः॥

॥ अथ चतुर्थी ॥

अस्य क्रत्वा विचेतसो दस्मस्य वसु रथ आ।

अधा विश्वासु हव्योऽग्निर्विक्षु प्र शस्यते॥ ४

अस्य। क्रत्वा। विऽचेतसः। दस्मस्य। वसु। रथे। आ।

अध। विश्वासु। हव्यः। अग्निः। विक्षु। प्र। शस्यते॥ ४

विचेतसः सुमनस ऋत्विजोऽस्य दस्मस्य दर्शनीयस्यास्याग्नेः क्रत्वा कर्मणा यज्ञादिना वसु वसूनि धनानि रथ आ दधति। हव्यो यज्ञार्थमाह्वातव्यः सोऽग्निरध अथ तदनंतरमेव विश्वासु सर्वासु विक्षु प्रजासु प्रशस्यते। स्तूयते॥

॥ अथ पंचमी ॥

नू न इद्धि वार्यमासा सचंत सूरयः।

ऊर्जो नपादभिष्टये पाहि शग्धि स्वस्तय उतैधि पृत्सु नो वृधे॥ ५

नु। नः। इत्। हि। वार्यं। आसा। सचंत। सूरयः।

ऊर्जः। नपात्। अभिष्टये। पाहि। शग्धि। स्वस्तये। उत।

एधि। पृत्ऽसु। नः। वृधे॥ ५

हिताय। अश्वऽदाव्ने। सख्ये। दक्षस्य। मंहना।

भुवः। सः। अग्ने। आनुषक्। स्तोता। चित्। ते। अमर्त्य॥२

हे अग्ने हिताय हितयुक्ताय अश्वदाव्ने। अश्वं युवं हविर्देवेभ्यो वहति प्रापय-तीति अश्वदावा। तस्मै सख्युःस्तोतव्य दक्षस्य बलस्य धनस्य वा मंहना मंहनाये दानाय भव। हे अमर्त्य नित्याग्ने यतः कारणात्ते तव्यं स अश्वदावा आनुषक् सर्वदानुषक्तमिदं स्तोत्रं धत्ते। धारयति। स्तोता चित् स्तोता च भवति॥

॥ अथ तृतीया॥

तं वो दीर्घायुशोचिषं गिरा हुवे मघोनाम्।

अरिष्टो येषां रथो व्यश्वदावन्नीयते॥३

तम्। वः। दीर्घायुऽशोचिषम्। गिरा। हुवे। मघोनाम्।

अरिष्टः। येषाम्। रथः। वि। अश्वऽदावन्। ईयते॥३

हे अग्ने दीर्घायुशोचिषं दीर्घगमनदीप्तिं तं वः। पूजायां बहुवचनं। त्वां मघोनां धनिनां कृते गिरा स्तोत्रेण हुवे। आह्वयामि। हे अश्वदावन्नश्वानां दातर्येषां धनिनां रथो युद्धेष्वरिष्टः शत्रुभिरहिंसितो वीयते विगच्छतु॥

॥ अथ चतुर्थी॥

चित्रा वा येषु दीधितिरासन्नुक्था पान्ति ये।

स्तीर्णं बर्हिः स्वर्णरे श्रवांसि दधिरे परि॥४

चित्रा। वा। येषु। दीधितिः। आसन्। उक्था। पान्ति। ये।

स्तीर्णम्। बर्हिः। स्वःऽनरे। श्रवांसि। दधिरे। परि॥४

येषु यजमानेषु चित्रा नानाविधा दीधितिर्यज्ञविषया क्रिया भवति। ये चासन्नास्ये उक्थान्युक्थानि स्तोत्राणि पान्ति रक्षन्ति तैर्ऋत्विग्भिः स्तीर्णं स्तीर्णं च बर्हिर्येर्ऋत्विग्भिः पर्यपरि श्रवांस्यन्नानि हवींषि स्थापिते। स्वः स्वर्गं नरं यजमानं नयतीति स्वर्णरो यज्ञः। तस्मिन्दधिरे। निधीयन्ते॥

॥ अथ पंचमी ॥

ये मे पंचाशतं ददुरश्वानां सधस्तुति ।

द्युमदग्ने महि श्रवो बृहत्कृधि मघोनां नृवदमृत नृणां ॥ ५

ये । मे । पंचाशतं । ददुः । अश्वानां । सधऽस्तुति ।

द्युऽमत् । अग्ने । महि । श्रवः । बृहत् । कृधि । मघोनां ।

नृऽवत् । अमृत । नृणां ॥ ५

ये मघवानो दातारो मे मह्यं सधस्तुति स्तुत्या सहितं अश्वानां पंचाशतं ददुः हे अमृताग्ने त्वं तेषां मघोनां नृणां द्युमत् दीप्तिमत् महि महद् बृहत् महत्परिचारकमनुष्ययुक्तं श्रवोऽन्नं कृधि । कुरु । देहीत्यर्थः ॥

॥ इति चतुर्थस्य प्रथमे दशमो वर्गः ॥

अभ्यवस्था इति चतुर्ऋचं पंचमं सूक्तं । अत्रेयमनुक्रमणिका । अभ्यवस्था वव्रिरात्रेयस्त्वानुष्टुभो विराड्रूपेति । आत्रेयो वव्रिर्ऋषिः । प्रथमाद्वितीये गायत्र्यौ तृतीयाचतुर्थ्यावनुष्टुभौ पंचमी विराड्रूपा एकादशिनश्चत्वारोऽष्टक विराड्रूपेत्युक्तलक्षणोपेतत्वात् ॥

॥ तत्रेयं प्रथमा ॥

अभ्यवस्थाः प्र जायंते प्र वव्रेर्वव्रिश्चिकेत ।

उपस्थे मातुर्वि चष्टे ॥ १

अभि । अवऽस्थाः । प्र । जायंते । प्र । वव्रेः । वव्रिः । चिकेत ।

उपऽस्थे । मातुः । वि । चष्टे ॥ १

यद्येष्टं येरभ्युत्तरमवस्था अयोभका इमाः प्रजायंते । तासां वव्रिरावरणिका संवत्सरोऽग्निः प्रचिकेत । प्रजानीयात् । मात्रा पालयत्विति भावः । सोऽग्निर्मातुः पृथिव्या उपस्थे समीपे स्थितं पदार्थजातं विचष्टे पश्यति ॥

॥ अथ द्वितीया ॥

जुहुरे वि चितयंतोऽनिमिषं नृम्णं पांति ।

आ दृळ्हां पुरं विविशुः ॥ २

जुहुरे । वि । चितयंतः । अनिऽमिषं । नृम्णं । पांति ।

आ । दृळ्हां । पुरं । विविशुः ॥ २

ये विचितयंतस्तव प्रभावं जानंतो जनास्त्वामनिमिषं सर्वदा जुहुरे यज्ञार्थं स्थानात्प्रच्यावयंति आहूय च नृम्णं तव बलं हविर्भिः स्तोत्रैश्च पांति रक्षंति ते दृळ्हां मत्कृभिः शत्रुभिरनभिगम्यां पुरं पुरीमाविविशुः। प्रविशंति। यत्स पूर्भिरायसीभिर्नि पाहि। ऋग्वे० ७, ३, ७। इति निगमः॥

॥ अथ तृतीया ॥

आ श्वैत्रेयस्य जंतवो द्युमद्वर्धंत कृष्टयः ।

निष्कग्रीवो बृहदुक्थ एना मध्वा न वाजयुः ॥ ३

आ । श्वैत्रेयस्य । जंतवः । द्युऽमत् । वर्धंत । कृष्टयः ।

निष्कऽग्रीवः । बृहत्ऽउक्थः । एना । मध्वा । न । वाजऽयुः ॥ ३

जायंत इति जंतवः। कृष्टयो मनुष्या ऋत्विजो मध्वा न मधुनेव एनेना स्तुत्या। यद्वा नकारश्चार्थः। मधुना च श्वैत्रेयस्य। विभक्तिव्यत्ययः। तत्र भवस्य श्वैत्रेयस्य द्युमद्दीप्तिमद्बलमावर्धंत। अभिवर्धयंति। किंविधाः कृष्टयः। निष्कग्रीवो निष्कोऽलंकारः ... । वचनव्यत्ययेनैकवचनं। बृहदुक्थो बृहत्स्तोत्रा वाजयुरन्नकामाः॥

॥ अथ चतुर्थी ॥

प्रियं दुग्धं न काम्यमजामि जाम्योः सचा ।

घर्मो न वाजजठरोऽदब्धः शश्वतो दभः ॥ ४

इयमाग्नेयी सौरी वा । हे देव ज्यायांसमतिशयेन प्रवृद्धमस्य वहनस्य ॥ वततिर्गतिकर्मा ॥ गंतुरस्य सूर्यस्य ॥ कर्मणि षष्ठी ॥ यज्ञं गंतारं केतुना प्रज्ञापकेन कर्मणोदयादिलक्षणेन निमित्तभूतेनोपलक्षितः स्तुत्यर्थं त्वां चरति । गच्छति । भजते यजमानः । केन साधनेन । याद्युः स्तुतिषु ते त्वदीयं नाम नमनं नामकं वा रूपं वर्तते तन्नाम्ना स्तुतिरित्यर्थः । यद्वास्य वहनस्य गमनशीलस्य तव केतुना तमोनिवारणादिकर्मणा ज्ञापितं त्वां चरति । याहशि यादृशे कामे धायि यत्रे ये कर्तार इत्यर्थः । समर्थ्योद्यमो गम्यते । तां । अथानि नियतं प्रतिनिर्दिष्टव्यत्यासादथशब्दार्थो ग्रामव्यः । तादृशं स्तोतृकाम्यया तोषितेन कर्मणा स्तुत्यादिलक्षणेन विदत् । विंदते । य उ य एव स्वतपन-शीलोऽग्निः सन् स्वमनीषयैव वहते धारयति फलं सोऽस्मत्काममर्थं करत् । करोतीति शेषः । अथवा य उ य एव स्वयं वहते स्वयमेवानुतिष्ठति सोऽस्यर्थं कुर्यात् । न ह्यन्येन कारितं फलवद्भवति ॥

॥ अथ नवमी ॥

समुद्रमासामव तस्थे अग्रिमा न रिष्यति सवनं यस्मिन्नायता ।
अत्रा न हार्दि क्रवणस्य रेजते यत्रा मतिर्विद्यते पूतबंधनी ॥ ९

समुद्रं । आसां । अव । तस्थे । अग्रिमा । न । रिष्यति ।
सवनं । यस्मिन् । आऽयता ।
अत्र । न । हार्दि । क्रवणस्य । रेजते । यत्र । मतिः ।
विद्यते । पूतऽबंधनी ॥

इयमपि सौरी । आसां स्तुतीनां समुद्रं समुद्रवत्पर्याप्तस्थानभूतं सूर्यमग्निमात्मीयं श्रेष्ठाग्रदीया स्तुतिरवतस्थे । अवगच्छति । यद्वा अग्रिमा प्रधानाऽस्मदीया स्तुतिरिति संबंधः । सवनं । सूयते सोमोऽस्मिन्निति सवनं यज्ञकर्म । न रिष्यति । न हिंस्यते । किंतु प्रवर्धत इत्यर्थः । यस्मिन्नायता विस्तीर्णानि कर्माणि वर्तमानमिति । अत्रास्मिन्यजमानगृहे क्रवणस्य स्तुतिकर्तुर्हार्दि हृदयसंबंधि हृदयगतं काम्यं फलं न रेजते । न विचलति । न वृथा भवति । यत्र यस्मिन् गोगृहे मतिः पूतं सूर्यमनु-बध्नंती विद्यते अत्र न रेजत इति ॥

॥ अथ दशमी ॥

स हि क्षत्रस्य मनसस्य चित्तिभिरेवावदस्य यजतस्य सध्रेः।

अवत्सारस्य स्पृणवाम रण्वभिः शविष्ठं वाजं विदुषा चिदर्ध्यम् ॥१०॥

सः। हि। क्षत्रस्य। मनसस्य। चित्तिऽभिः। एवऽवदस्य।

यजतस्य। सध्रेः।

अवऽत्सारस्य। स्पृणवाम। रण्वऽभिः। शविष्ठं। वाजं।

विदुषा। चित्। अर्ध्यं ॥ १०॥

इयमपि सौरी। स हि स खलु वर्तिता देवः सर्वैः स्तुत्यः। सर्वकामपूरक इत्यर्थः। हिशब्दो लोकद्वयप्रसिद्धिद्योतनार्थः। तस्मात् स्तौमि। अत्रान्ये च ऋषयोऽत्र इष्टलिङ्गा इत्युक्तत्वात् अत्रादय ऋषयः। क्षत्रस्य मनसस्यैवावदस्य यजतस्य सध्रे रवत्सारस्य चैतःकपोतानामार्षं रण्वभी रमणीयाभिश्चित्तिभिः स्पृणवाम। पूरयाम। किं। शविष्ठं बलमतिशयेन बलवदन्नं। अन्नं वै वाज इति श्रुतेः। विदुषा चिद्विदुषापि प्रज्ञावतार्ध्यं समर्धनीयं स्पृणवाम। अस्मादयं वयमिति संबंध ॥

॥ इति चतुर्थस्य द्वितीये चतुर्विंशो वर्गः ॥

॥ अथैकादशी ॥

श्येन आसामदितिः कक्ष्यो३ मदो विश्ववारस्य यजतस्य मायिनः।

समन्यमन्यमर्थयन्त्येतवे विदुर्विषाणं परिपानमन्ति ते ॥ ११

श्येनः। आसां। अदितिः। कक्ष्यः। मदः। विश्वऽवारस्य।

यजतस्य। मायिनः।

सं। अन्यंऽअन्यं। अर्थयंति। एतवे। विदुः। विऽसानं।

परिऽपानं। अंति। ते ॥ ११॥

सदृशेषामेवं। विश्ववारादीनां सप्तानामृषीणां समूह आशानामपां सौमरस-
अवधानां मदः श्येनः संक्रमीयगमनः सोम पालककार्यं गंतादितिरदीनोऽति-
मदनः कल्पः कल्पपूरकश्च भवतीति शेषः। ते विश्ववारादयः सख्ये महत्ता एतमे
सोमं प्राप्य तत्त्वामायाम्यमर्थ्यं परस्परं समर्थयंति। आचंतऽनुष्णां। ते विचार्य
विवेचेय महस्य दातारं परिपानमंत्थंतिके विदुः। जानंति लभंते वा॥

॥ अथ द्वादशी ॥

सदापृणो यजतो वि द्विषो वधीद्बाहुवृक्तः श्रुतवित्तर्यो वः
सचा।
उभा स वरा प्रत्येति भाति च यदीं गणं भजते सुप्रयावभिः॥१२

सदाऽपृणः। यजतः। वि। द्विषः। वधीत्। बाहुऽवृक्तः।
श्रुतऽवित्। तर्यः। वः। सचा।
उभा। सः। वरा। प्रति। एति। भाति। च। यत्। ईं।
गणं। भजते। सुप्रयावऽभिः॥ १२

सदापृणः सर्वदा दानशील एतन्नामा यजनीयो यष्टा च बाहुवृक्तो बाहुभ्यां
कृतदर्भच्छेदनश्च श्रुतवित् श्रुतस्य वेत्ता च तर्यश्च। एतेषां पंचानां परस्परापेक्षया
प्रत्येकमेकवचनं। स स ऋषिर्वि द्विष शत्रून्वधीत् हिंस्यात् यो युष्माकं सचा सहितः।
युष्माभिः संगत इत्यर्थः। स ऋषिर्वरा श्रेष्ठावुभावैहिकलोकपरलोकविषयौ कामौ
प्रत्येति। प्राप्नोति। भाति च। यद्यस्मादीमिमं गणं देवसंघं सुप्रयावभिः सुष्ठु
प्रकर्षेण निश्चयद्भिः स्तोतृभिर्भजते तस्माद्देवं भागीति॥

॥ अथ त्रयोदशी ॥

सुतंभरो यजमानस्य सत्पतिर्विश्वासामूधः स धियामुदंचनः।
भरद्धेनू रसवच्छिश्रिये पयोऽनुब्रुवाणो अध्येति न स्वपन्॥१३

सुत॒ऽभ॒रः । यज॑मानस्य । स॒त्ऽप॑तिः । विश्वा॑साम् । ऊधः॑ ।
स॒ः । धि॒याम् । उ॒त्ऽअ॒ञ्च॑नः ।
भर॑त् । धे॒नुः । रस॑ऽवत् । शि॒श्रि॒ये । पयः॑ । अ॒नु॒ऽब्रु॒वा॒णः ।
अधि॑ । ए॒ति॒ । न । स्व॒पन् ॥ १३ ॥

यजमानस्याध्वरस्य मध्ये सुतंभरो यागनिर्वाहक एतन्नामा ऋषिः सत्पतिः सतां विद्यमानानां फलानां पालयिता होता भवतीत्यर्थः । स च विश्वासां विश्वासां धियां सर्वेषां कर्मणामूधः उत्कृष्टं फलस्यंदनमूध उदंचयिता । फलप्रापक इत्यर्थः । धेनुर्गौ रसवत्सारवद्यो भरत् । आहरत् । तत्र पयः शिश्रिये । आश्रितं भवति । सामर्थ्यात् । तत्सर्वमनुब्रुवाणो ऽनुक्रमेण संकीर्तयन् न स्वपन् स्वापमकुर्वन् अनवरतमध्येति । अधीते । सुतंभरस्याहमस्मीति ॥

॥ अथ चतुर्दशी ॥

यो जा॒गार॒ तमृचः॑ कामयन्ते॒ यो जा॒गार॒ तमु॒ सामा॑नि यन्ति ।
यो जा॒गार॒ तम॒यं सोम॑ आह॒ तवा॒हम॑स्मि स॒ख्ये न्यो॑काः ॥ १४ ॥

यः । जा॒गार॑ । तम् । ऋचः॑ । का॒म॒य॒न्ते॒ । यः । जा॒गार॑ । तम् ।
ऊं॒ इति॑ । सामा॑नि । य॒न्ति॒ ।
यः । जा॒गार॑ । तम् । अ॒यम् । सोमः॑ । आ॒ह॒ । तव॑ । अ॒हम् ।
अ॒स्मि॒ । स॒ख्ये । नि॒ऽओ॑काः ॥ १४ ॥

यो देवो जागार सर्वदा विनिद्रो जागरूको भवति तमृचः सर्वा ऋगात्मिकाः कामयंते । यश्च जागार तमु तमेव सामानि स्तोत्ररूपाणि यंति । प्राप्नुवंति । यो जागार तमयमभिषुतः सोम आह वक्ति मां स्वीकुर्विति । हे अग्ने तावकस्य तव सख्ये समानख्याने हितकरणो न्योका नितरामोको यस्य सो ऽहमस्मि । भवामि ॥

॥ अथ पंचदशी ॥

अग्निर्जागार तमृचः कामयंतेऽग्निर्जागार तमु सामानि यंति ।

अग्निर्जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥ १५

अग्निः । जागार । तं । ऋचः । कामयंते । अग्निः ।

जागार । तं । ऊं इति । सामानि । यंति ।

अग्निः । जागार । तं । अयं । सोमः । आह । तव । अहं ।

अस्मि । सख्ये । निऽओकाः ॥ १५

पूर्ववत् निगदितव्याख्या । य इत्यस्य स्थानेऽग्निरिति विशेषः ॥

॥ इति चतुर्थस्य द्वितीये पंचविंशो वर्गः ॥

॥ इति पंचमे मंडले तृतीयोऽनुवाकः ॥

अथ चतुर्थेऽनुवाके द्वादश सूक्तानि । तत्र विदा दिव इत्येकादशर्चं प्रथमं सूक्तं । सदापृणो नामात्रेय ऋषिः । त्रिष्टुप् छंदः । वै तदित्यनुवृत्त्वादिदमपि वैश्वदेवं । विदा एकादश सदापृण इत्यनुक्रमणिका । विनियोगो लैंगिकः ॥

॥ तत्र प्रथमा ॥

विदा दिवो विष्यन्नद्रिमुक्थैरायत्या उषसो अर्चिनो गुः ।

अपावृत व्रजिनीरुत्स्वर्गाद्वि दुरो मानुषीर्देव आवः ॥ १

विदाः । दिवः । विऽस्यन् । अद्रिं । उक्थैः । आऽयत्याः ।

उषसः । अर्चिनः । गुः ।

अप । अवृत । व्रजिनीः । उत् । स्वः । गात् । वि । दुरः ।

मानुषीः । देवः । आवरित्यावः ॥ १

अत्रेंद्रादयो लिंगोक्तदेवताः । अत्रांगिरसां पणिभिरपहृत्य गिरेरंतः स्थापितानां गवामिंद्रेण विमोक्ष प्रतिपाद्यते । विदाः [illegible] अयंदर्थविदः । दिवः । गा निगूढा

अश्मे । उत्ऽस्थाय । पर्वतस्य । गर्भः । महीनाम् । जनुषे ।
पूर्व्याय ।
वि । पर्वतः । जिहीत । साधत । द्यौः । आऽविवासन्तः ।
दसयन्त । भूम ॥ ५ ॥

अश्मे महदुत्स्थाय स्तोत्रे पर्वतस्य पर्ववतो मेघस्य गर्भो गर्भस्थानीयमुदकं जिहीत । चलति । साधयति वेंद्रः । कोऽयमाथाश्मे । महीनां महतीनां स्तुतीनां जनुष उत्पादयित्रे पूर्व्याय प्रत्नाय । तदेव पुनरुच्यते । पर्वतो मेघो विजिहीत । द्यौश्च साधत । साधयति वृष्टिं । आविवासन्तः सर्वतः परिचरन्तोऽङ्गिरसो भूमात्यधिकं दसयन्त । उपक्षपयन्त्यात्मानं कर्मभिः ॥

॥ अथ चतुर्थी ॥

सूक्तेभिर्वो वचोभिर्देवजुष्टैरिन्द्रा न्वग्नी अवसे हुवध्यै ।
उक्थेभिर्हि ष्मा कवयः सुयज्ञा आविवासन्तो मरुतो यजन्ति ॥ ४ ॥

सुऽउक्तेभिः । वः । वचःऽभिः । देवऽजुष्टैः । इन्द्रा । नु ।
अग्नी इति । अवसे । हुवध्यै ।
उक्थेभिः । हि । स्म । कवयः । सुऽयज्ञाः । आऽविवासन्तः ।
मरुतः । यजन्ति ॥ ४ ॥

हे इन्द्रा हे अग्नी ॥ परस्परापेक्षया प्रत्येकं द्विवचनं । यद्वात्रैकमेव पदं मध्ये व्यवधानं छांदसं ॥ हे इन्द्राग्नी वो युवां व्यत्ययेन बहुवचनं ॥ देवजुष्टैर्देवैः सेवनीयैः सूक्तेभिः सूक्तैः सुवचनैः शोभनगुणप्रकाशनपरैर्वचोभिर्वचोभिरवसेऽस्मद्रक्षणाय हुवध्यै । आह्वयामि । नु क्षिप्रं युवामुक्थेभिः स्तोत्रैः कवयः मेधाविनो पूर्वे कवयः सुयज्ञाः शोभनयागा आविवासन्तः स्तुत्यादिना परिचरन्तो मरुतो मरुत्सदृशाः कर्मसु शोभा यजन्ति । पूजयन्ति ॥ हि स्मेति पूरणौ ॥

इदमंगिरसां वाक्यं। एत। आगच्छत। आगत्य च धियं स्तुतिं कृणवाम।
करवाम। हे सखायः परस्परं सखिभूता अंगिरस इत्यंगिरसां वचनं। या धीर्माता
गवां निर्मात्री गोमयं व्रजं पणिभिरपहृतमप वृणुत अपावृणोत्। यया च मनुः शि-
शिप्रं विगतच्छन्नं शत्रुं जिगाय जितवान्। यद्वा मनुः सर्वस्य मंतेंद्रो शिशिप्रो
हनुः। स तमस्माभिः कृतया स्तोमलक्षणया धिया जिगाय। यया च वणिक् वणि-
ग्भावरूपेण कर्मणा बहुफलाकांक्षी कक्षीवान् वंकुर्नेलेच्छया वनगामी पुरीषं पूरक-
मुदकमाप। याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशः। ऋग्वे०
१, ११२, ११। इति हि श्रुतं॥

॥ सैषा सप्तमी ॥

अनूनोदत्र हस्तयतो अद्रिरार्चन्येन दश मासो नवग्वाः।
ऋतं यती सरमा गा अविंदद्विश्वानि सत्यांगिराश्चकार॥ ७

अनूनोत्। अत्र। हस्तऽयतः। अद्रिः। आर्चन्। येन। दश।
मासः। नवऽग्वाः।
ऋतं। यती। सरमा। गा। अविंदत्। विश्वानि। सत्या।
अंगिराः। चकार॥ ७

अत्रास्मिन्कर्मण्यद्रिरभिषवग्रावा हस्तयतो हस्तेन संयतः सन् अनूनोत्। नौति-
रत्र शब्दमात्रे वर्तते। अशब्दयत्। येन ग्राव्णा तदभिषवेण दश मासो मासान् दश-
मासपर्यंतं नवग्वाः। नवमासपर्यंतं गवार्थमनुतिष्ठंतोऽगिरसो नवग्वाः। नवगोयुक्ता
वार्चन् अपूजयन्निंद्रं। यद्वा दशसंख्याकमासोपेता दशमासानुष्ठाना अंगिरसोऽपरे
नवग्वाश्चैते सर्वेऽपि येनार्चंति। नवग्वासः सुतसोमास इंद्रं। ऋग्वे० ५, १९, १२।
इति हि निगमः। ऋतं सत्यं यज्ञं वा यती प्राप्नुवती सरमा सरणशीला स्तुतिरूपा
वागंगिरसां गवार्थमिंद्रेण प्रहिता देवशुनी वा गा अविंदत् पणिभिरपहृताः।
विश्वानि सर्वाणि स्तुत्यादिलक्षणानि सत्या सत्यानि चकारांगिराः॥

॥ अथाष्टमी ॥

विश्वे अस्या व्युषि माहिनायाः सं यद्गोभिरङ्गिरसो नवन्त ।
उत्स आसां परमे सधस्थ ऋतस्य पथा सरमा विदद्गाः ॥ ८

विश्वे । अस्याः । विऽउषि । माहिनायाः । सम् । यत् ।
गोभिः । अङ्गिरसः । नवन्त ।
उत्सः । आसाम् । परमे । सधऽस्थे । ऋतस्य । पथा ।
सरमा । विदत् । गाः ॥ ८

विश्वे सर्वेऽङ्गिरसो माहिनाया मंहनीयाया अस्या उषसो व्युषि व्युच्छने सति गवामासरकैर्यज्ञार्थमपहृते अपि यद्यदा गोभिः संनवन्त संगच्छन्ते तदानीं गवामुत्सः क्षीराद्युत्पत्तिस्थानः परमे उत्कृष्टे सधस्थे सहस्थाने वर्तते उपयुक्तोऽभवदित्यर्थः । ऋतस्य पथा मार्गेण सरमा नाम देवशुनी या गा निगूढा अविदत् । अलभत् । यद्वासां गवां परमे सधस्थे सहस्थाने ऋतस्य निगूहनाद्देव उत्स उदकस्य प्रस्रवणो भवति । विस्तीर्णमित्यर्थः । तेन ऋतस्योदकस्य पथा मार्गेण सरमा गा अविदत् ॥

॥ अथ नवमी ॥

आ सूर्यो यातु सप्ताश्वः क्षेत्रं यदस्योर्विया दीर्घयाथे ।
रघुः श्येनः पतयदन्धो अच्छा युवा कविर्दीदयद्गोषु गच्छन् ॥ ९

आ । सूर्यः । यातु । सप्तऽअश्वः । क्षेत्रम् । यत् । अस्य ।
उर्विया । दीर्घऽयाथे ।
रघुः । श्येनः । पतयत् । अन्धः । अच्छ । युवा । कविः ।
दीदयत् । गोषु । गच्छन् ॥ ९

सूर्यः सर्वस्य प्रेरको देवः सप्ताश्वः सर्पणस्वभावाश्वोपेतः सप्तसंख्याकाश्वो वा आयातु । अस्मदभिमुखमागच्छतु । यद्यस्मादस्य सूर्यस्य दीर्घयाथे दीर्घगमने क्षेत्रं गन्तव्यप्रदेश उर्वियोरु अतिप्रभूतमासीत् । स एव देवो रघुर्लघुगमनः स श्येनः

यंत्रमीयमानमो ऽंधो दीयमानं हविरच्छाभिमुखं पतयत् । आगच्छति । युवा तरुण नित्यबिता कविः क्रांतदर्शी सन् गोषु रश्मिषु गच्छन्मध्ये वर्तमान् दीदयत् । दीप्यते । रघु। श्येनः सुपर्णो ऽंधोऽच्छ पतयत् । द्युलोकस्थं सोमलक्षणं देवानामन्नमाहर्तुमभि- मानेन तदभिमुखमगात् । युवेत्यादि शिष्टं समानं ॥

॥ अथ दशमी ॥

आ सूर्यो॑ अरुहच्छु॒क्रमर्णोऽयु॑क्त य॒द्ध॒रितो॑ वी॒तपृ॑ष्ठाः ।
उ॒द्ना न नाव॑मनयंत धीरा॑ आशृ॒ण्वती॒राप॑ अ॒र्वाग॑तिष्ठन् ॥ १०

आ । सूर्यः॑ । अ॒रु॒ह॒त् । शु॒क्रं । अर्णः॑ । अयु॑क्त । यत् ।
ह॒रितः॑ । वी॒तऽपृ॑ष्ठाः ।
उ॒द्ना । न । नाव॑ं । अ॒न॒यं॒त॒ । धीराः॑ । आ॒ऽशृ॒ण्वतीः॑ ।
आपः॑ । अ॒र्वाक् । अ॒ति॒ष्ठ॒न् ॥ १०

सूर्यो देवः शुक्रं दीप्तमर्णः उदकं अभ्यारुहत् । सर्वतः प्रादुर्भवति । यदा ह्यश्वा हरितोऽश्वान्वीतपृष्ठाः कांतपृष्ठानयुक्त रथेऽयोजयत् तदा तं सूर्यं धीरा धीमंतो यजमानानाकाद उद्नोदकेन नावं न नावमिवानयंत । तदाशृण्वतीः सर्वतोऽनुशृण्वत्यो आपोऽर्वागभिमुखा अतिष्ठन् । अभवन् ॥

॥ अथैकादशी ॥

धियं॑ वो अ॒प्सु द॑धिषे स्व॒र्षां यया॑तर॒न्दश॑ मा॒सो नव॑ग्वाः ।
अ॒या धि॒या स्या॑म दे॒वगो॑पा अ॒या धि॒या तु॑तु॒र्यामात्यंह॑ः ॥ ११

धियं॑ । वः॒ । अ॒प्ऽसु । द॒धि॒षे॒ । स्वः॒ऽसाम् । यया॑ । अत॑रन् ।
दश॑ । मा॒सः । नव॑ऽग्वाः ।
अ॒या । धि॒या । स्या॒म॒ । दे॒वऽगो॑पाः । अ॒या । धि॒या ।
तु॒तु॒र्या॒म॒ । अति॑ । अंह॑ः ॥ ११

॥ अथ द्वितीया॥

अग्न इंद्र वरुण मित्र देवाः शर्धः प्र यंत मारुतोत विष्णो।
उभा नासत्या रुद्रो अध ग्नाः पूषा भगः सरस्वती जुषंत॥ २

अग्ने। इंद्र। वरुण। मित्र। देवाः। शर्धः। प्र। यंत।
मारुत। उत। विष्णो इति।
उभा। नासत्या। रुद्रः। अध। ग्नाः। पूषा। भगः।
सरस्वती। जुषंत॥ २

हे अग्न इंद्र वरुण मित्र देवा यूयं शर्धो बलं मारुतं प्रयंत। प्रयच्छत॥ अत्र सर्वत्र पूर्वस्याविद्यमानवत्त्वेनामंत्रितस्य पादादित्वादनिघातः। प्रथमस्य तु स्वत एव पादादित्वं॥ उतापि च उ मारुत मारुतानि मरुतां बलानि हे विष्णो यूयं शर्धं प्रयंत॥ विष्णो इत्यस्योतेत्यनेन व्यवधानान्निघातः॥ किंचोभा नासत्या सत्यभूतौ रुद्रोऽध अथ ग्ना एतेषां देवानां स्त्रियश्च पूषा भगः सरस्वती च जुषंत। सेवंतामस्मदीयं यज्ञं स्तुतिं वा॥

॥ अथ तृतीया॥

इंद्राग्नी मित्रावरुणादितिं स्वः पृथिवीं द्यां मरुतः पर्वताँ अपः।
हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शंसं सवितारमूतये॥ ३

इंद्राग्नी इति। मित्रावरुणा। अदितिं। स्वरिति स्वः।
पृथिवीं। द्यां। मरुतः। पर्वतान्। अपः।
हुवे। विष्णुं। पूषणं। ब्रह्मणः। पतिं। भगं। नु। शंसं।
सवितारं। ऊतये॥

इंद्रादिदेवानेतान् अत्रस्थ देवनूतयेऽस्मद्रक्षणाय हुवे। आह्वयामि स्तौमि वा आदित्यादित्य वक्ष्यं स्वरवात्

॥ अथ चतुर्थी ॥

उत नो विष्णुरुत वातो अस्रिधो द्रविणोदा उत सोमो मयस्करत् ।
उत ऋभव उत राये नो अश्विनोत त्वष्टोत विभ्वानु मंसते ॥ ४

उत । नः । विष्णुः । उत । वातः । अस्रिधः । द्रविणःऽदाः ।
उत । सोमः । मयः । करत् ।
उत । ऋभवः । उत । राये । नः । अश्विना । उत ।
त्वष्टा । उत । विऽभ्वा । अनु । मंसते ॥

उतापि च नोऽस्माकं विष्णुर्व्यापको देवो मयस्करत्। किंच मयः सुखनाम। सुखं करोतु। उतापि च वातो वायुरस्रिधोऽहिंसकः सन् मयस्करत्। किंच द्रविणोदा धनस्य दाता सोमोऽपि मयस्करत्। उतापि च ऋभवो नोऽस्माकं राये धनायानुमंसते। अनुमन्यंतां। उताश्विनाश्विनौ च उत त्वष्टा देव उत विभ्वा ऋभूणामन्यतमो देवः। एते सर्वेऽप्यनुमंसते। यद्वा अनुमंसत इति प्रत्येकं संबंधनीयं॥

॥ अथ पंचमी ॥

उत त्यन्नो मारुतं शर्ध आ गमद्दिविक्षयं यजतं बर्हिरासदे।
बृहस्पतिः शर्म पूषोत नो यमद्वरूथ्यं वरुणो मित्रो अर्यमा ॥ ५

उत । त्यत् । नः । मारुतं । शर्धः । आ । गमत् ।
दिविऽक्षयं । यजतं । बर्हिः । आऽसदे ।
बृहस्पतिः । शर्म । पूषा । उत । नः । यमत् । वरूथ्यं ।
वरुणः । मित्रः । अर्यमा ॥ ५

॥ तयोर्मध्ये प्रथमा सूक्ते सप्तमी ॥

देवानां पत्नीरुशतीरवंतु नः प्रावंतु नस्तुजये वाजसातये ।

याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म

यच्छत ॥ ७

देवानां । पत्नीः । उशतीः । अवंतु । नः । प्र । अवंतु । नः ।

तुजये । वाजऽसातये ।

याः । पार्थिवासः । याः । अपां । अपि । व्रते । ताः । नः ।

देवीः । सुऽहवाः । शर्म । यच्छत ॥ ७

देवानामिंद्रादीनां पत्नीः पत्न्य उशतीरुशत्योऽस्मदीयां स्तुतिं कर्म वा कामयमाना नोऽस्मानवंतु । रक्षंतु । तथा नोऽस्माकं तुजये बलवते पुत्राय वाजसातयेऽन्नलाभाय संग्रामाय वा प्रावंतु । प्रकर्षेण रक्षंतु गच्छंतु वा । याः पार्थिवासः पृथिवीसंबंधिन्यो याश्चापामुदकानां व्रते कर्मण्यंतरिक्षे वर्तंते ता हे देवीर्देव्यो हे सुहवाः शोभनाह्वाना यूयं नोऽस्मभ्यं शर्म यच्छत ॥

॥ अथाष्टमी ॥

उत ग्ना व्यंतु देवपत्नीरिंद्राण्यग्नाय्यश्विनी राट् ।

आ रोदसी वरुणानी शृणोतु व्यंतु देवीर्य

ऋतुर्जनीनां ॥ ८

उत । ग्नाः । व्यंतु । देवऽपत्नीः । इंद्राणी । अग्नायी ।

अश्विनी । राट् ।

आ । रोदसी इति । वरुणानी । शृणोतु । व्यंतु । देवीः ।

यः । ऋतुः । जनीनां ॥ ८

उतापि च ग्नाः स्त्रियो देवपत्नीर्देवपत्न्यो देवाः पतयो यासां ताः । ताइह्यो व्यंतु । हविर्भक्षयंतु । ता विविच्योच्यंते । इंद्राणी इंद्रस्य पत्न्यग्नाय्यग्नेः पत्न्यश्विन्यश्विनोः पत्नी राट् राजमाना । किंच रोदसी । रुद्रस्य पत्नीति यास्केनोक्तं । एवं सति त्विषितस्तुका रोदसी । ऋग्वे० १. १६७. ५. । इत्यत्र यथाद्युदात्तप्रसक्तिर्न न तद्वदत्रापि भाव्यं । तथापि शाकल्येन महर्षिणैवमुक्तत्वात्तथैव द्रष्टव्यं । वरुणानी वरुणस्य पत्न्या सर्वतः प्रत्येकं शृणोतु । किंच देवीः पत्नीसंयाजदेव्यो व्यंतु । खादंतु हविः । यो जनीनां देवजायानामृतुः कालस्तदभिमाना देव्योऽपि शृण्वंतु व्यंतु च । अत्रापि च ग्ना व्यंतु देवपत्न्यः । नि० १२. ४६. । इत्यादि निरुक्तं द्रष्टव्यं ॥

॥ इति चतुर्थस्य द्वितीयेऽष्टाविंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके द्वितीयोऽध्यायः समाप्तः ॥

---

॥ श्रीभारत्यै नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथ तृतीयोऽध्याय आरभ्यते। तत्र प्रयुंजतीति सप्तर्चं तृतीयं सूक्तं प्रतिरथ-स्यार्षं त्रैष्टुभं। पूर्वत्र वैश्वदेवं वै तदित्युक्तत्वादिदमपि वैश्वदेवं। प्रयुंजती सप्त प्रतिरथ इत्यनुक्रमणिका॥ विनियोगो लैंगिकः॥

॥ तत्र प्रथमा ॥

प्रयुंजती दिव एति ब्रुवाणा मही माता दुहितुर्बोधयंती।
आविवासंती युवतिर्मनीषा पितृभ्य आ सदने जोहुवाना॥ १

प्रऽयुंजती। दिवः। एति। ब्रुवाणा। मही। माता।
दुहितुः। बोधयंती।
आऽविवासंती। युवतिः। मनीषा। पितृऽभ्यः। आ।
सदने। जोहुवाना॥ १

एषोषस्था। प्रयुंजती प्राणिनः प्रस्तुतेषु कर्मसु दिवो द्युलोकादेति। आगच्छति ब्रुवाणा स्तूयमाना॥ कर्मणि कर्तृप्रत्ययः॥ मही महती माता प्रकाशस्य देवानां वा निर्मात्री दुहितुर्भूम्या बोधयंती बोधं कुर्वाणा। तदुपजीव्यत्वाद् दुहितृत्व-मुपचर्यते। यद्वा दुहितुर्दिव इति संबंधः॥ उषसो दिवो दुहितृत्वं व्यक्तं दुहितर्दिव इत्यादिषु प्रसिद्धं। अन्यत्र च दिवो दुहिता भुवनस्य पत्नी। ऋग्वे० ७. ७५. ४.। इत्युषसो द्युदुहितृत्वमाम्नातं। अत इदमभिगम्यते। कदाचिद्द्यौरुषसो जायन भावाय दिव इति। प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये।

तै० ब्रा० २. २२. । इति हि श्रूयते । लिंगं च दृश्यते कार्यकारणभावव्यत्ययेऽदिते- र्दक्षोऽजायत दक्षाद्वदितिरिति ॥ किंच आविशमाना परिचरंती युवतिर्मंडयंती स्वयं नित्यतरुणी वा मनीषा स्तुतिमती पितृभ्यः ॥ तृतीयार्थे पंचमी ॥ पितृभिः पालकै- र्देवैः सह सदने यागस्थाने आ समंतात् जोहुवाना ह्वयमाना । यद्वा पितृभ्यः कर्मणां पालकेभ्यो यजमानेभ्य इष्टप्रापणेन पालकेभ्यो वा तेषामर्थाय जोहुवाना ॥

॥ अथ द्वितीया ॥

अजिरासस्तदप ईयमाना आतस्थिवांसो अमृतस्य नाभिं ।

अनंतास उरवो विश्वतः सीं परि द्यावापृथिवी यंति

पंथाः ॥ २

अजिरासः । तत्ऽअपः । ईयमानाः । आतस्थिऽवांसः ।

अमृतस्य । नाभिं ।

अनंतासः । उरवः । विश्वतः । सीं । परि ।

द्यावापृथिवी इति । यंति । पंथाः ॥ २

अजिरासो गमनशीलाः ॥ अजिरशिशिरशिथिलेत्यादिना निपा- तितः ॥ तदपस्तदेव प्रकाशनरूपं कर्म यस्य तत्तादृशमपः ईयमाना गच्छंतोऽमृतस्य सूर्यस्य नाभिं संनाहकं मंडलं अमृतस्योदकस्य वा नाभिमंतरिक्षमातस्थिवांस आस्थि- तवंतोऽनंतासोऽपरिमिता उरवो व्याप्ताः पंथाः पतनशीला रश्मयो द्यावापृथिवी परि दिवं च पृथिवीं चांतरिक्षं च विश्वतः परितो यंति । गच्छंति । सीमिति पूरणः ॥

॥ अथ तृतीया ॥

उक्षा समुद्रो अरुषः सुपर्णः पूर्वस्य योनिं पितुरा विवेश ।

मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसस्पात्यंतौ ॥ ३

॥ अथ पंचमी ॥

इदं वपुर्निवचनं जनासश्चरंति यन्नद्यस्तस्थुरापः।

द्वे यदीं बिभृतो मातुरन्ये इहेह जाते यम्या३ सबंधू॥ ५

इदं। वपुः। निऽवचनं। जनासः। चरंति। यत्। नद्यः।

तस्थुः। आपः।

द्वे इति। यत्। ईं। बिभृतः। मातुः। अन्ये इति।

इहऽइह। जाते इति। यम्या। सबंधू इति सऽबंधू॥ ५

जनासो हे जना ऋत्विज इदं पुरतो दृश्यमानं वपुः शरीरं मंडलं निवचनं स्तुत्यं भवतीति शेषः। यन्मंडलमुपजीव्य नद्यश्चरंति प्रवहंति। आपश्च यन्मंडलमधितस्थुः। मंडलाधीनत्वात्तासां। ईमेतदुक्तलक्षणं यन्मंडलं द्वे अहोरात्रे मातुर्निर्मातुरुत्पादकस्यांतरिक्षादन्ये इहेह जाते इह चेह च लोके जाते निष्पन्ने यम्या यमिनी नियमनीये युग्मभूते वा सबंधू समानबले समानबंधने उभयोरप्येक एव सूर्यो बंधकोऽन्योन्ययोस्तादृशौ बिभृतः धारयतः॥

॥ अथ षष्ठी ॥

वि तन्वते धियो अस्मा अपांसि वस्त्रा पुत्राय मातरो वयंति।

उपप्रक्षे वृषणो मोदमाना दिवस्पथा वध्वो यंत्यच्छ॥ ६

वि। तन्वते। धियः। अस्मै। अपांसि। वस्त्रा। पुत्राय।

मातरः। वयंति।

उपऽप्रक्षे। वृषणः। मोदमानाः। दिवः। पथा। वध्वः।

यंति। अच्छ॥ ६

यस्मै सूर्याय धियः स्तुतीरपांसि कर्माणि च वितन्वते। विस्तारयंति यजमानाः। पुत्राय पुत्रस्थानीयाय मातरो निर्मात्र्य उषसो दिवो वा वस्त्रा वस्त्राणि वयंति। निष्पादयंति। वस्त्रसदृशानि तेजांसि निर्मितानि संपादयंतीत्यर्थः। वृषणः सेक्तारः सूर्यस्योपप्रक्ष उपपर्चने संपर्के सति मोदमाना हृष्यन्तो वध्वो वधूस्थानीया रश्मयो दिवस्पथा सूर्यसंबंधिना मार्गेणाच्छाभिमुख्यं यंति। गच्छंति। प्रसरंति॥

॥ अथ सप्तमी ॥

तद॑स्तु मित्रावरुणा तद॑ग्ने शं योर॒स्मभ्य॑मि॒दम॑स्तु श॒स्तं।
अ॒शी॒महि॑ गा॒धमु॒त प्र॑ति॒ष्ठां नमो॑ दि॒वे बृ॑ह॒ते साद॑नाय ॥ ७

तत्। अ॒स्तु॒। मि॒त्रा॒व॒रु॒णा॒। तत्। अ॒ग्ने॒। शं। योः।
अ॒स्मभ्यं॑। इ॒दं। अ॒स्तु॒। श॒स्तं।
अ॒शी॒महि॑। गा॒धं। उ॒त। प्र॒ति॒ऽस्थां। नमः॑। दि॒वे।
बृ॒ह॒ते। सद॑नाय ॥ ७

अत्र लिंगोक्तदेवताः। हे मित्रावरुणा मित्रावरुणौ तदिदं सूक्तं शस्तं स्तुतमस्तु। भवतु। हे अग्ने तत्सूक्तं शस्तमस्तु। अस्मभ्यं शं सुखाय योर्दुःखानामभिश्रवणायेदं शस्तमस्तु। वयं चाशीमहि प्राप्नुयाम गाधं स्थितिं। उतापि च प्रतिष्ठां स्थितेरविच्छित्तिं चाशीमहि। नमो नमस्करोमि दिवे द्योतमानाय सूर्याय बृहते महते सादनायाश्रयाय विश्वस्य॥

॥ इति चतुर्थस्य तृतीये प्रथमो वर्गः॥

कदु प्रियायेति पंचर्चं चतुर्थं सूक्तं। प्रतिभानुर्नामात्रेय ऋषिः। जगती छंदः। विश्वे देवा देवताः। तथा चानुक्रमणिका। कदु पंच प्रतिभानुर्जागतमिति॥ आभिप्लविके पंचमेऽहनि वैश्वदेवशस्त्र इदं सूक्तं निविद्धानं। सूत्रितं च। कदु प्रियायेति वैश्वदेवं। आ० ७.७.। इति॥

॥ तत्र प्रथमा ॥

कदु प्रियाय धाम्ने मनामहे स्वक्षत्राय स्वयशसे महे वयं।

आमेन्यस्य रजसो यदभ्र आँ अपो वृणाना वितनोति

मायिनी। १

कत्। ऊं इति। प्रियाय। धाम्ने। मनामहे। स्वऽक्षत्राय।

स्वऽयशसे। महे। वयं।

आऽमेन्यस्य। रजसः। यत्। अभ्रे। आ। अपः। वृणाना।

विऽतनोति। मायिनी॥ १

अत्र वैद्युताग्निसंस्तवः कदु कदा। उ इति पूरणः। प्रियाय सर्वेषां प्रियभूताय। वृष्टिद्वारा जनिरादिप्रयोजकत्वादस्य प्रियत्वमस्य प्रसिद्धं। तादृशाय धाम्ने तेजसे वैद्युताय। उत्तरवाक्ये ऽभ्रे ऽपो वितनोतीति वक्ष्यमाणत्वादिदं लभ्यते। कीदृशाय स्वक्षत्राय स्वभूतबलाय किंच स्वयशसे स्वभूतान्नाय। सर्वमप्यन्नं ह्यस्य स्वं। महे महते पूज्याय वयं कद मनामहे। स्तवाम। यत्॥ उत्तरत्र स्त्रीलिंगनिर्देशाद्येति विपरिणामयितव्यं॥ आग्नेयी यद्विद्युदामेन्यस्य समंतान्मातव्यस्य रजसो ऽन्तरिक्षस्य। अपरिमितमपि नभ इयदिति सर्वैर्मीयते। संबंधिन्यभ्रे मेघ आ अधि मेघस्योपर्येव उदकानि वृष्टिलक्षणानि वितनोति विस्तारयति वृणानाच्छादयंती मेघानां वः मायिनी। मायेति प्रज्ञानाम। प्रज्ञावती सती। यद्वास्य संबंधिनी माध्यमिका वागिति वा योज्यं॥

॥ अथ द्वितीया ॥

ता अंत्नत वयुनं वीरवंक्षणं समान्या वृतया विश्वमा रजः।

अपो अपाचीरपरा अपेजते प्र पूर्वाभिस्तिरते देवयुर्जनः॥ २

गमयंतः। यद्वा अहोरात्राणि दिवसान् संवर्तयंतः सम्यक् प्रवर्तयंतो वि च वर्तयन् अहोरात्राणि निवर्तयंति गतान्येव पुनः प्रापयंति च। तपनपरिस्पंदाधीनत्वात्प्राणिनामायुः अवस्थापोरात्रादिप्रवर्तकस्य॥

॥ अथ चतुर्थी ॥

तामं॑स्य री॒तिं प॑र॒शोरि॑व प्र॒त्यनी॑कमख्यं भु॒जे अ॑स्य॒ वर्प॑सः।

सचा॒ यदि॑ पितु॒मंत॑मिव॒ क्षयं॒ रत्नं॒ दधा॑ति॒ भर॑हूतये वि॒शे॥ ४

ताम्। अ॒स्य॒। री॒तिम्। प॒र॒शोःऽइ॑व। प्रति॑। अनी॑कम्। अ॒ख्य॒म्।

भु॒जे। अ॒स्य॒। वर्प॑सः।

सचा॑। यदि॑। पि॒तु॒मन्तं॑ऽइव। क्षय॑म्। रत्न॑म्। दधा॑ति।

भर॑ऽहूतये। वि॒शे॥ ४

इयमाग्नेयी। तां प्रसिद्धामस्याग्ने रीतिं स्वभावं गतिं वा परशोरिव प्रति परशोः प्रतिनिधिमिव पश्यामि। परशुर्यथा स्वाभिमुखमभिगतं सादयति तद्वदित्यर्थः। अस्य वर्पसो रूपवतोऽस्यादित्यस्यानीकं रश्मिसमूहं भुजे भोगायाख्यं। कथयाम्यहं। यदि यस्मात् च देवः सचा सहायः सन् पितुमंतमन्नवंतं क्षयमिव निवासमिव भरहूतये संग्रामे यज्ञे वाह्वानयुक्ताय विशे यजमानाय रत्नं रमणीयं धनं दधाति धारयति। उभयमपि ददातीत्यर्थः॥

॥ अथ पंचमी ॥

स जि॒ह्वया॒ चतु॑रनीक ऋंजते॒ चारु॒ वसा॑नो॒ वरु॑णो॒ यत॑न्न॒रिं।

न तस्य॑ वि॒द्म पु॑रुष॒त्वता॑ व॒यं यतो॒ भगः॑ सवि॒ता दाति॒ वार्यं॑॥ ५

सः। जि॒ह्वया॑। चतुः॑ऽअनीकः। ऋं॒ज॒ते॒। चारु॑। वसा॑नः।

वरु॑णः। यत॑न्। अ॒रिम्।

न। तस्य॑। वि॒द्म। पु॒रु॒ष॒त्वता॑। व॒यम्। यतः॑। भगः॑। स॒वि॒ता।

दाति॑। वार्य॑म्॥ ५

सोऽग्निश्चतुरनीकश्चतुर्दिक्षु प्रवृत्तज्वालः सन् जिह्वया मंक्ते । गच्छति घृतादिकं । यद्वा जिह्वया चतुरनीकः सन् मंक्ते । अलंकरोति आत्मानं । किं कुर्वन् । चारु रमणीयं तेजो वसान आच्छादयन् वरुणस्तमोनिवारकः सन् अरिमनितं यतन् उद्धरन् । नश्यं । तमित्यर्थः । तं न विद्म । न जानीमो वयं पुरुषत्वता पुरुषत्वेन कामानां पूरकत्वेन वा युक्तं ॥ अपरो भावप्रत्ययः पूरणः ॥ यतोऽयं भगो भजनीयः सविता प्रेरको देवो दाति यच्छति वार्यं वरणीयं धनं ॥

॥ इति चतुर्थस्य तृतीये द्वितीयो वर्गः ॥

देवं व इति पंचर्चं सूक्तमात्रेयस्य प्रतिप्रभस्यार्षं त्रैष्टुभं वैश्वदेवं । देवं वः प्रतिप्रभोऽंत्या तृणपाणिरित्यनुक्रमणिका ॥ विनियोगो लैंगिकः ॥

॥ तत्र प्रथमा ॥

देवं वो अद्य सवितारमेषे भगं च रत्नं विभजंतमायोः ।

आ वां नरा पुरुभुजा ववृत्यां दिवेदिवे चिदश्विना सखीयन् ॥ १

देवं । वः । अद्य । सवितारं । आ । ईषे । भगं । च ।

रत्नं । विऽभजंतं । आयोः ।

आ । वां । नरा । पुरुऽभुजा । ववृत्यां । दिवेऽदिवे । चित् ।

अश्विना । सखिऽयन् ॥ १

देवं द्योतमानं सवितारं सर्वस्याभ्यनुज्ञातारं वः । त्वामित्यर्थः । यद्वा होतुरिदं वाक्यं । वो यजमानेभ्यो युष्मभ्यमद्येदानीमीषे । उपगच्छामि । भगं च भजनीयं देवगयोर्मनुष्यस्य यजमानस्य रत्नं रमणीयं हविर्विभजंतं । भगो वा विभजतीति हि भगस्य विभजनं प्रसिद्धं । रायो विभक्ता संभरश्च वस्वः । ऋग्वे० ४. १७. ११. । भगो विभक्ता शवसा । ऋग्वे० ५. ४६. ६. । इति च श्रुतिः । यद्वा चतुर्थ्यर्थे षष्ठी । यजमानार्थं रत्नं रमणीयं धनं विभजंतं । हे नरा नेतारौ हे पुरुभुजा । पुरु भुंजाते इति पुरुभुजौ ॥ हे अश्विनाश्विनौ वां युवां दिवे दिवे प्रतिदिनमागमनार्थं । आवर्तयाम्यस्मदभिमुखं । सखीयन् युवयोः सखित्वमिच्छन् । चिदिति पूरणः ॥

॥ अथ द्वितीया ॥

प्रति प्रयाणमसुरस्य विद्वान्त्सूक्तैर्देवं सवितारं दुवस्य ।
उप ब्रुवीत नमसा विजानञ्ज्येष्ठं च रत्नं विभजन्तमायोः ॥ २

प्रति । प्रऽयानं । असुरस्य । विद्वान् । सुऽउक्तैः । देवं ।
सवितारं । दुवस्य ।
उप । ब्रुवीत । नमसा । विऽजानन् । ज्येष्ठं । च । रत्नं ।
विऽभजन्तं । आयोः ॥ २

असुरस्य प्रज्ञानां निरसितुः सवितुः प्रति प्रयाणं प्रत्यागमनं विद्वान् जानन् सूक्तैः सवितारं देवं दुवस्य । हे अंतरात्मन् । किंचायोर्मनुष्याय ज्येष्ठं रत्नं धनं च विभजन्तं । ददतमित्यर्थः । नमसा नमस्कारेण हविषा वा विजानन् विशेषेण भावयन्नित्यर्थः ॥ यद्वांतर्णीतण्यर्थोऽयं ॥ ज्ञापयन् उपब्रुवीत स्तौतु भवान् ॥

॥ अथ तृतीया ॥

अदत्रया दयते वार्याणि पूषा भगो अदितिर्वस्त उस्रः ।
इंद्रो विष्णुर्वरुणो मित्रो अग्निरहानि भद्रा जनयंत दस्माः ॥ ३

अदत्रऽया । दयते । वार्याणि । पूषा । भगः । अदितिः । वस्ते ।
उस्रः ।
इंद्रः । विष्णुः । वरुणः । मित्रः । अग्निः । अहानि । भद्रा ।
जनयंत । दस्माः । ३

अदनमन्निरदत्रमदनीयानि ॥ अदेरौणादिकस्त्रप्रत्ययः । सुपां सुलुगिति याजादेशः ॥ अथवा अत्यदत्रा जिह्वा । तया वार्याणि वरणीयानि काष्ठानि दयते । दयतिरनेककर्मास दहने वर्तते । दहतीत्यर्थः । सामर्थ्यादग्निरिति गम्यते । यद्वा-दनीयानि वरणीयान्यन्नानि दयते । ददाति यजमानाय ॥ दय दानगतिहिंसा-

वख्यानेषु ॥ कीदृशोऽग्निः। पूषा पोषको भगो भजनीयोऽदितिरखंडनीयः। यद्वा पूषादयस्त्रयोऽपि प्रत्येकमभजनीयानि वार्याणि वसूनि दयते। उस्रः यौः वस्ते। आच्छादयति। सामर्थ्यात्तेजांसि। इंद्रादयः पंचापि देवा दस्रा दर्शनीया अह्नानि सर्वोत्तमागंतॄणि भद्रा शोभनीयानि जनयंत। जनयंति। दिवसानां यागदानादिक्रि- यार्हत्वमेव भद्रत्वं ॥

॥ अथ चतुर्थी ॥

तन्नो॑ अन॒र्वा स॑वि॒ता वरू॑थं॒ तत्सिंध॑व इ॒षयं॑तो॒ अनु॑ ग्मन्।

उप॒ यद्वोचे॑ अध्व॒रस्य॒ होता॑ रा॒यः स्या॑म॒ पत॑यो॒ वाज॑रत्नाः ॥ ४

तत्। नः। अनर्वा। सविता। वरूथं। तत्। सिंधवः।

इषयंतः। अनु। ग्मन्।

उप। यत्। वोचे। अध्वरस्य। होता। रायः। स्याम।

पतयः। वाजऽरत्नाः ॥ ४

तत्प्रसिद्धं वरूथं वरणीयमस्मदभिमतं धनं नोऽस्मभ्यमनर्वाप्रत्यृतः केनाप्यनिरस्कृतः सविता देवः प्रयच्छत्विति शेषः। तद्धनं सिंधवः स्यंदनशीला इषयंतो गच्छंत्यो नद्योऽनु अनुसृत्य ग्मन्। गच्छंतु। धनं दातुं गच्छंत्वित्यर्थः। यद्यस्मादध्वरस्य यागस्य होता होमनिष्पादकोऽहमुपवोचे उपेत्य ब्रवीमि तस्मात्तत्प्रयच्छंत्विति शेषः। वयं चात्मीयो रायो धनस्य बहुविधस्य पतयः स्वामिनः स्याम। भवेम। वाजरत्ना अन्नेन बलेन वा रमणीयाः। अथवा यद्यस्मादहं ब्रवीमि तस्मात्सविता नो वरूथमागच्छतु। तस्मादेव च नो वरूथं प्रसृतमनुग्मन् अनुगच्छंत्विति वा योज्यं ॥

॥ अथ पंचमी ॥

प्र ये वसु॑भ्य॒ ईव॒दा नमो॒ दुर्ये मि॒त्रे वरु॑णे सू॒क्तवा॑चः।

अवै॒त्वभ्वं॑ कृणु॒ता वरी॑यो दि॒वस्पृ॑थि॒व्योरव॑सा मदेम ॥ ५

प्र। ये। वसुऽभ्यः। ईवंत्। आ। नमः। दुः। ये। मित्रे।
वरुणे। सूक्तऽवाचः।
अवं। एतु। अभ्वं। कृणुत। वरीयः। दिवः। पृथिव्योः।
अवसा। मदेम॥ ४

ये यजमाना वसुभ्यो यज्ञनिवासेभ्यो देवेभ्य ईवद्गमनवन्नमोऽन्नं पन्नात्मकं प्र दुराहुः। ये च मित्रे देवे वरुणे च सूक्तवाचः सूक्तवचसो भवंति तानस्मानभ्वं महद्भयं तेभ्यो चावैतु। अपगच्छतु। हे देवाः कृणुत कुरुत च एतेभ्यो वरीय उरुतरं सुखं। दिवस्पृथिव्योर्द्यावापृथिव्योरवसा रक्षणेन मदेम। हृष्येम॥

॥ इति चतुर्थस्य तृतीये तृतीयो वर्गः॥

विश्वो देवस्येति पंचर्चं षष्ठं सूक्तं स्वस्त्यात्रेयस्यार्षं वैश्वदेवं। पंचमी पंक्ति-राद्याश्चतस्रोऽनुष्टुभः। तदनुक्रांतमनुक्रमण्यां। विश्वः स्वस्त्यात्रेयः पंचांत्या पंक्तिरिति। द्व्यूह्याभिप्लवषडहयोः प्रथमेऽहनि वैश्वदेवशस्त्रे विश्वो देवस्येति प्रतिपत्तृचस्याद्याः सूत्रितं च। विश्वो देवस्य नेतुरित्येका। आ० ७. ६.। इति॥ आभिप्लविकेषु द्वितीयचतुर्थषष्ठेष्वहःस्वेवैव वैश्वदेवस्य शस्त्रस्य प्रतिपत्। युंक्ष्वेत्थमभिप्लवे। आ० ७. ६.। इति सूत्रितत्वात्॥

॥ तत्र प्रथमा॥

विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यं।
विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे॥ १

विश्वः। देवस्य। नेतुः। मर्तः। वुरीत। सख्यं।
विश्वः। राये। इषुध्यति। द्युम्नं। वृणीत। पुष्यसे॥ १

विश्वः सर्वो मर्तो नेतुर्देवस्य। सवितुरित्यर्थः। तस्य सख्यं वुरीत। वृणीत। विश्वो जनो राये धनलाभायेषुध्यति॥ पंचमलकारः॥ ईयोत। तस्मात्तदनुग्रहात् सर्वो जनो द्युम्नं धनं वृणीत सविचारं पुष्यसे पुष्ट्यै पर्याप्तं धनं॥

॥ अथ द्वितीया ॥

ते ते देव नेतर्ये चेमाँ अनुशसे ।

ते राया ते ह्या३पृचे सचेमहि सचथ्यैः ॥ २

ते । ते । देव । नेतः । ये । च । इमान् । अनुऽशसे ।

ते । राया । ते । हि । आऽपृचे । सचेमहि । सचथ्यैः ॥ २

हे नेतर्देव ते तव स्वभूतास्ते वयं यजमाना ये चान्य इमान् ॥ विभक्तिव्यत्ययः ॥ इमे होत्रादयोऽनुशसे शंसितुं प्रभवंति तेऽपि त्वदीयाः । यद्वेमानन्यानिंद्रादीननुशसे क्रमेण शंसितुं प्रभवंति । एकैव वा महानात्मा देवता स सूर्यः स हि सर्वभूतात्मेत्युक्तत्वादितरासां देवतानां तदंतर्भावादिति भावः । न केवलं त्वद्भक्ता एवेत्यर्थः । ते उभये वयं राया धनेन सचेमहीति संबंधः । ते हि ते खल्वापृच आपर्चनीयाः ॥ कृत्यार्थे केन्प्रत्ययः । कृन्मेजंत इत्यव्ययत्वाद्विभक्तेरदर्शनं ॥ सचथ्यैः सर्वैः कार्यैः सचेमहि । संगच्छेमहि ॥

॥ अथ तृतीया ॥

अतो न आ नॄनतिथीनतः पत्नीर्दशस्यत ।

आरे विश्वं पथेष्ठां द्विषो युयोतु यूयुविः ॥ ३

अतः । नः । आ । नॄन् । अतिथीन् । अतः । पत्नीः ।

दशस्यत ।

आरे । विश्वं । पथेऽस्थां । द्विषः । युयोतु । यूयुविः ॥ ३

अतोऽस्मिन्यज्ञे ॥ सार्वविभक्तिकस्तसिः ॥ नोऽस्माकमृत्विजां नॄन्नेतॄनतिथीन् तद्वत्पूज्यान्देवाना दशस्यत । सर्वतः परिचरत । अतोऽस्मिन्यज्ञे पत्नीर्देवानां पत्नीर्यूयं दशस्यत हविःप्रदानादिना । यद्वा नोऽस्मभ्यं नॄन् पुत्रभृत्यादीनतिथीन् पत्नीश्चैतत्सर्वमत्र दशस्यत । हे देवाः प्रयच्छत । आरे दूरे विश्वं सर्वं पथेष्ठां मार्गे भवतामं वैरिणां द्विषोऽस्मानपि द्विषो द्वेष्टॄन्युयोतु पृथक्करोतु देवसंघः सविता वा युयुविः सर्वेषामिश्रयिता पृथक्कर्ता ॥

॥ अथ चतुर्थी ॥

यत्र वह्निरभिहितो दुद्रवद्द्रोण्यः पशुः।

नृमणा वीरपस्त्योऽर्णा धीरेव सनिता॥ ४

यत्र। वह्निः। अभिऽहितः। दुद्रवत्। द्रोण्यः। पशुः।

नृऽमनाः। वीरऽपस्त्यः। अर्णा। धीराऽइव। सनिता॥ ४

यत्र यस्मिन्यज्ञे वह्निर्यज्ञस्य वोढाभिहितो यूपं प्रापितो द्रोण्यो यूपार्हः पशुर्दुद्रवत् गच्छति यूपं प्रति तत्र नृमणा यजमानमनाः सविता वीरपस्त्यः। वीरा ऋत्विग्यजमानाः पुत्रभृत्यादयो वा तद्वत्पस्त्यं गृहं यस्य स तादृशः। प्रेरितगृहो वा। पुत्राद्युपेतगृहप्रद इत्यर्थः। सनिता संभक्ता भवति। अर्णा अरणकुशला धीरेव योषिदिव। यद्वार्णानि सर्वोऽप्यभिलक्ष्य सनिता भवति॥

॥ अथ पंचमी ॥

एष ते देव नेता रथस्पतिः शं रयिः।

शं राये शं स्वस्तय इषःस्तुतो मनामहे देवस्तुतो मनामहे॥ ५

एषः। ते। देव। नेतरिति। रथःपतिः। शं। रयिः।

शं। राये। शं। स्वस्तये। इषःऽस्तुतः। मनामहे।

देवऽस्तुतः। मनामहे॥ ५

हे नेतर्देव सवितस्ते तवैष रथःपतिः सर्वस्य पालको रयिर्दातव्यधनवान्॥ मत्वर्थो लुप्यते॥ शं करोत्विति शेषः। वयं च राये धनस्य शं सुखाय। यद्वा राये धनाय शं सुखाय च स्वस्तयेऽविनाशायेषःस्तुत एषणीयस्य सवितुः स्तोतारो वयं मनायहे। स्तुमः। देवस्तुतो देवानां देवस्य वा सवितुः स्तोतारो मनामहे। स्तुमः॥

॥ इति चतुर्थस्य तृतीये चतुर्थो वर्गः॥

अग्ने सुतस्येति पंचदशर्चं सप्तमं सूक्तं। अत्रानुक्रमणिका। अग्ने पंचोना आद्यास्तिस्रो गायत्र्यः षडुष्णिहस्तिस्रो जगत्यस्त्रिष्टुभौ चान्त्येऽनुष्टुभाविति। ऋषिश्चान्वादिति परिभाषया स्वस्त्यात्रेय ऋषिः। आदितस्तिस्रो गायत्र्यः पंचम्याद्याः षडुष्णिह एकादश्याद्यास्तिस्रो जगत्यस्त्रिष्टुभौ वा चतुर्दशी पंचदश्यावनुष्टुभौ। विश्वे देवा देवता॥

॥ तत्र प्रथमा॥

अग्ने सुतस्य पीतये विश्वैरूमेभिरा गहि।

देवेभिर्हव्यदातये॥ १

अग्ने। सुतस्य। पीतये। विश्वैः। ऊमेभिः। आ। गहि।

देवेभिः। हव्यऽदातये॥ १

हे अग्ने त्वं सुतस्य सोमस्य पानाय विश्वैरूमेभिः सर्वैरपि रक्षकैर्देवैरिन्द्रादिभिः सह हव्यदातये हविर्दानाय यजमानाय वा आगहि। आगच्छ॥

॥ अथ द्वितीया॥

ऋतधीतय आ गत सत्यधर्माणो अध्वरं।

अग्नेः पिबत जिह्वया॥ २

ऋतऽधीतयः। आ। गत। सत्यऽधर्माणः। अध्वरं।

अग्ने। पिबत। जिह्वया॥ २

हे ऋतधीतयः सत्यस्तुतयोऽबाध्यकर्माणो वा देवा अध्वरमस्मदीयमागत। आगच्छत। आगत्य च हे सत्यधर्माणः सत्यस्य धारयितारो यूयमग्नेर्जिह्वया पिबत। हविरादिकं॥

॥ अथ तृतीया ॥

विप्रेभिर्विप्र संत्य प्रातर्यावभिरा गहि ।
देवेभिः सोमपीतये ॥

विप्रेभिः । विप्र । सत्य । प्रातर्यावंऽभिः । आ । गहि ।
देवेभिः । सोमंऽपीतये ॥ ३

हे विप्र मेधाविन् विविधकामानां वा पूरक हे संत्य संभजनीयाग्ने विप्रेभिर्मेधाविभिः प्रातर्यावभिः प्रातःकाल आगंतृभिर्देवेभिर्देवैः सार्धमागहि । आगच्छ । किमर्थं । सोमपीतये सोमपानाय ॥

॥ अथ चतुर्थी ॥

अयं सोमंश्चमू सुतोऽमंत्रे परिं षिच्यते ।
प्रिय इंद्राय वायवे ॥ ४

अयं । सोमंः । चमू इतिं । सुतः । अमंत्रे । परिं । सिच्यते ।
प्रियः । इंद्राय । वायवे ॥ ४

अयं पुरतो वर्तमानः सोमश्चमू चम्वोरन्योरधिषवणफलकयोः सुतोऽभिषुतः सन् अमत्रे पात्रे परिषिच्यते पूयते । स चेंद्राय वायवे च प्रियः । तं पातुं हे इंद्रवायू आगच्छतमिति शेषः ॥

वायवा याहीत्येषा द्वृच्यस्य तृतीयेऽहनि प्रउगशस्त्रे वायव्यतृचस्याद्या । सूत्रितं च । वायवा याहि वीतय इत्येका वायो याहि शिवा दिव इति द्वे । आ० ७. १० । इति ॥

॥ सैषा पंचमी ॥

वायवा याहि वीतये जुषाणो हव्यदातये ।
पिबा सुतस्यांधसो अभि प्रयः ॥ ५

वायो इति । आ । याहि । वीतये । जुषाणः । हव्यऽदातये ।

पिब । सुतस्य । अंधसः । अभि । प्रयः ॥ ५

हे वायो प्रयोऽन्नं सोमाख्यमभि अभिलक्ष्य आ याहि वीतये भक्षणाय जुषाणः प्रीयमाणो हव्यदातये हविर्दात्रे यजमानाय तदर्थं । आगत्य च सुतस्याभिषुतस्य अंधसोऽन्नं सोमलक्षणं पिब ॥

॥ इति चतुर्थस्य तृतीये पंचमो वर्गः ॥

इन्द्रश्च वायवित्यनयोः इति प्रउगगतस्य ऐंद्रवायवस्य इंद्रवायू इत्यादिके द्वे ऋचौ अंतेत् । तयोः प्रथमा द्वितीया चाप्रथमे तृचं संपादयेत् । तथा च सूत्रितं । इंद्रश्च वायवेषां सुतानामिति द्वयोरन्यतरां त्रिः । आ० ७. १०. । इति ॥

॥ तृचे प्रथमा सूक्ते षष्ठी ॥

इंद्रश्च वायवेषां सुतानां पीतिमर्हथः ।

ताञ्जुषेथामरेपसावभि प्रयः ॥ ६

इंद्रः । च । वायो इति । एषां । सुतानां । पीतिं । अर्हथः ।

तान् । जुषेथां । अरेपसौ । अभि । प्रयः ॥ ६

हे वायो त्वं चेंद्रश्चैवं युवां एषां सुतानामभिषुतानां सोमानां पीतिं पानमर्हथः । यस्मादेवं तस्मात्तान् सोमरसान् जुषेथां सेवेथामरेपसावहिंसकौ । तदर्थं प्रयः सोमाख्यमन्नमभिलक्ष्यागच्छतमिति शेषः । यद्वा प्रयोऽन्नवान् ॥

॥ अथ सप्तमी ॥

सुता इंद्राय वायवे सोमासो दध्याशिरः ।

निम्नं न यंति सिंधवोऽभि प्रयः ॥ ७

सुताः । इंद्राय । वायवे । सोमासः । दधिऽआशिरः ।

निम्नं । न । यंति । सिंधवः । अभि । प्रयः ॥ ७

इंद्राय वायवे च सोमासः सोमा दध्याशिरो दध्याश्रयणाः सुताः। अभिषुताः। संपादिताः। ते च निम्नं गमं सिंधवो न नद्य इव हे इंद्रवायू युवामभियंति प्रयोऽवक्षणाः ॥

तृतीयेऽहनि प्रउगशस्त्रे सजूर्विश्वेभिरिति वैश्वदेवस्तृचः। सूत्रितं च। सजूर्विश्वेभिर्देवेभिरिह नः प्रिया प्रियाणि। आ० ७. १०। इति ॥

॥ सैषा तृचे प्रथमा सूक्तेऽष्टमी ॥

सजूर्विश्वेभिर्देवेभिरश्विभ्यामुषसा सजूः ।
आ याह्यग्ने अत्रिवत्सुते रण ॥ ८

सऽजूः । विश्वेभिः । देवेभिः । अश्विऽभ्याम् । उषसा । सऽजूः ।
आ । याहि । अग्ने । अत्रिऽवत् । सुते । रण ॥ ८

हे अग्ने विश्वेभिः सर्वैर्देवेभिर्देवैः सजूः संगतः सन् अश्विभ्यामुषसा च सजूः समानप्रीतिः सन् आयाहि । आगच्छ । अत्रिवदत्रिमिव । [illegible] यथा महेश्वरं । महाप्रियं यथा रमते तद्वत्सुतेऽभिषुते सोमे रण । रमस्व ॥

॥ अथ नवमी ॥

सजूर्मित्रावरुणाभ्यां सजूः सोमेन विष्णुना ।
आ याह्यग्ने अत्रिवत्सुते रण ॥ ९

सऽजूः । मित्रावरुणाभ्याम् । सऽजूः । सोमेन । विष्णुना ।
आ । याहि । अग्ने । अत्रिऽवत् । सुते । रण ॥ ९

॥ अथ दशमी ॥

सजूरादित्यैर्वसुभिः सजूरिन्द्रेण वायुना ।
आ याह्यग्ने अत्रिवत्सुते रण ॥ १०

सऽजूः । आदित्यैः । वसुंऽभिः । सऽजूः । इन्द्रेण । वायुना ।
आ । याहि । अग्ने । अत्रिऽवत् । सुते । रण ॥ १०

उसारे हि नवनीदृशक्यो सहे ॥

॥ इति चतुर्थस्य तृतीये षष्ठो वर्गः ॥

एकादश पञ्चऽर्चानि वैश्वदेवमस्त्वे स्वस्ति न इति हृचः । कृतिनं च । स्वस्ति नो मिमीतामश्विना भग इति हृच इति वैश्वदेवं । आ० ८.१ । इति ॥ तथा हृक्सूक्तिसवं वैश्वदेवमितिनिवृत्तानार्थोऽयं हृचः । स्वस्ति नो मिमीतामश्विना भग इति वैश्वदेवं । आ० ६.५ । इति सूत्रितत्वात् ॥

॥ तत्र प्रथमा सूक्त एकादशी ॥

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ ११

स्वस्ति । नः । मिमीताम् । अश्विना । भगः । स्वस्ति । देवी । अदितिः । अनर्वणः ।
स्वस्ति । पूषा । असुरः । दधातु । नः । स्वस्ति । द्यावापृथिवी इति । सुऽचेतुना ॥ ११

नोऽस्माकमश्विनावश्विनौ सकलविनाशं क्षेमं मिमीतां । कुरुतां । भगश्च स्वस्ति क्षेमं मिमीतां । तथा देव्यदितिश्च स्वस्ति मिमीतां । अनर्वणोऽप्रत्यृतः पूषा असुरः शत्रूणां निरसिता प्राणानां बलानां दाता वा नः स्वस्ति दधातु । नोऽस्माकं द्यावापृथिवी द्यावापृथिव्यावपि सुचेतुना शोभनेन प्रज्ञानेन विशिष्टे स्वस्ति मिमीतां ॥

॥ अथ द्वादशी ॥

स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।
बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ १२

स्वस्तये । वायुं । उप । ब्रवामहै । सोमं । स्वस्ति ।
भुवनस्य । यः । पतिः ।
बृहस्पतिं । सर्वऽगणं । स्वस्तये । स्वस्तये । आदित्यासः ।
भवन्तु । नः ॥ १२

स्वस्तये क्षेमाय वायुमुपब्रवामहै । स्तुम इत्यर्थः सोमं चोपब्रवामहै । यश्च सोमो भुवनस्य पतिः पालकः । सर्वलोकजीवनस्य सोमायत्तत्वात् । तथा सर्वगणं सर्वदेवगणोपेतं बृहस्पतिं बृहतः कर्मणो मंत्रस्य पालयितारं स्वस्तये स्तुमः । आदित्यास आदित्या अदितेः पुत्राः सर्वे देवा अथवाऽदशा द्वादश वा तेऽस्माकं स्वस्तये भवन्तु ॥

सत्रमध्ये दीक्षिते व्याधिते सति तन्निष्कृतिनि वैश्वदेवपशोरयं तृचो निमित्ता-र्थः। सूत्रितं च। स्वस्त्यात्रेयेमिमिदं दद्यात्। आ० ६.८.। इति। स्वस्त्यात्रेयपद-जातं तृचो विवक्षित इति तत्र व्याख्यातं। तथा रूपादिके सत्यप्ययं तृचो ज्ञेयः ॥

॥ अथ त्रयोदशी ॥

विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ।
देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ १३

विश्वे । देवाः । नः । अद्य । स्वस्तये । वैश्वानरः । वसुः ।
अग्निः । स्वस्तये ।
देवाः । अवन्तु । ऋभवः । स्वस्तये । स्वस्ति । नः । रुद्रः ।
पातु । अंहसः ॥ १३

विश्वे सर्वेऽपि देवा नोऽस्मानद्याग्निमाभिर्दिते स्वस्तये क्षेमायाविंतु । वैश्वानरः । विश्व एवं नरा नयंतीति वैश्वानरः । स्तुः सर्वस्य याबापितर्गिनः । अयमेव।ग्नि. वैश्वानरः इति याबप्रुषिः । नि० ७. २१. । इति याज्ञः । सोऽपि स्वस्तयेऽस्तु । देवा कभयोऽपि स्वस्तयेऽवंतु । ब्रह्मो दुःखाद्रावयिता देवोऽस्मानंहसः पापात् स्वस्ति पातु नोऽस्मान् ॥

## । अथ चतुर्दशी ।

स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति ।
स्वस्ति न इंद्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ॥ १४

स्वस्ति । मित्रावरुणा । स्वस्ति । पथ्ये । रेवति ।
स्वस्ति । नः । इंद्रः । च । अग्निः । च । स्वस्ति । नः ।
अदिते । कृधि ॥ १४

हे मित्रावरुणा अहोरात्राभिमानिदेवौ स्वस्ति कुरुतं । हे पथ्ये हे पथ्यास्वस्ति-देवि । पंथा अंतरिक्षमार्गः । तत्र स्थिता मार्गाभिमानिनी देवी । हे तादृशि रेवति धनवति देवि स्वस्ति कृधि । इंद्रश्चाग्निश्च प्रत्येकं नोऽस्मभ्यं स्वस्ति कृधि । हे अदिते देवि नः स्वस्ति कृधि । कुरु ॥

## ॥ अथ पंचदशी ॥

स्वस्ति पंथामनु चरेम सूर्याचंद्रमसाविव ।
पुनर्ददताघ्नता जानता सं गमेमहि ॥ १५

स्वस्ति । पंथां । अनु । चरेम । सूर्याचंद्रमसौऽइव ।
पुनः । ददता । अघ्नता । जानता । सं । गमेमहि ॥ १५

पंथां पंथानं स्वस्ति क्षेमेणानुचरेम सूर्याचंद्रमसाविव । तौ यथा निरालंबे मार्गे राक्षसादिभिरक्षुण्णौ संचरतस्तद्वत् । किंच वयं प्रवसंतः पुनर्ददताभिमतमघ्नता विरकाभविद्यकोपेनाघ्नता जानताभिज्ञरता बहोश्चिरकालं गतः कोऽयमिति

छंदेष्वनकुर्वता। नद्योऽत्रमिति वृध्यमानेनेत्यर्थः। पक्षावहूपेन बंधुकमेन संगमे-महि। यद्वा पूर्वार्धं पथस्तृतीं वाक्यमुत्तरार्धं बंधूनां। यद्वं बंधवो ददताभिमतमुपार्जितं अघ्नता प्रयाणकोपेनाहिंसता जानता सर्वं कर्माधि गच्छता प्रवसता संगमेमहि ॥

॥ इति चतुर्थस्य तृतीये सप्तमो वर्गः ॥

प्र श्यावाश्वेति सप्तदशर्चं सप्तमं सूक्तं। अत्रेयमनुक्रमणिका। प्र श्यावाश्व सप्तोना श्यावाश्वो मारुतं ह तत्पंक्तिः षळंत्या चेति। आत्रेयः श्यावाश्व ऋषिः। ह तदिति प्रयोगादिदमादीनि दश सूक्तानि मरुद्देवत्यानि। षष्ठी सप्तदशी च पंक्त्यौ शिष्टाः पंक्त्यंतपरिभाषयानुष्टुभः॥ गतो विनियोगः॥

॥ तत्र प्रथमा ॥

प्र श्यावाश्व धृष्णुयार्चा मरुद्भिर्ऋक्वभिः।

ये अद्रोघमनुष्वधं श्रवो मदंति यज्ञियाः॥ १

प्र। श्यावऽअश्व। धृष्णुऽया। अर्च। मरुत्ऽभिः। ऋक्वऽभिः।

ये। अद्रोघं। अनुऽस्वधं। श्रवः। मदंति। यज्ञियाः॥ १

हे श्यावाश्व एतन्नामक ऋषे धृष्णुया धृष्णुत्वयुक्तैः स्तुत्यान्मरुद्भिर्मरुतः प्रार्च॥ द्वितीयार्थे तृतीया॥ एवं स्वयमेव मंत्रेण प्रेष्यति। यद्वा यजमानो होतारं श्यावाश्वं ब्रूते। यद्वा मरुद्भिर्मरुत्सबंधिभिर्ऋक्वभिः स्तोत्रैः सह स्तोत्रैर्वार्च। स्तुहीत्यर्थः। ये मरुतो यज्ञिया यज्ञार्हा अनुष्वधं प्रत्यहं। हविर्लक्षणान्नप्रदानं स्वधा। अनु पश्चाद्वा। अद्रोघदहिंसकं श्रवोऽन्नं स्वाध्वा मदंति हृष्यंति॥

॥ अथ द्वितीया ॥

ते हि स्थिरस्य शवसः सखायः संति धृष्णुया।

ते यामन्ना धृषद्विनस्त्मना पांति शश्वतः॥ २

ते। स्थिरस्य। शवसः। सखायः। संति। धृष्णुऽया।

ते। यामन्। आ। धृषत्ऽविनः। त्मना। पांति। शश्वतः॥२

ते हि ते खलु स्थिरस्यापि चलितस्य यवसो वलस्य सम्राजः संति । अर्चंति महत् । पूजया पूजयथः । ते च यामस्य । यान् इति चार्थे । गमनेऽपि भूपहिनो चर्षणयंत-स्तनानात्मनाल्पच्छेद्यैवाद्भुतकारमनपेक्ष्यैव मरुतो मनुनस्याऽपुत्रमस्त्यादोऽपांति । रक्षंति ॥

॥ अथ तृतीया ॥

ते स्यंद्रासो नोक्षणोऽति ष्कंदंति शर्वरीः ।

मरुतामधा महो दिवि क्षमा च मन्महे ॥ ३

ते । स्यंद्रासः । न । उक्षणः । अति । स्कंदंति । शर्वरीः ।

मरुतां । अध । महः । दिवि । क्षमा । च । मन्महे ॥ ३

ते मरुतः स्यंद्रासः स्यंदनशीला उक्षणो जलस्य सेक्तारश्च । नेति चार्थे । यस्मात्स्कंद्रा अस्मान्तां तस्मात् शर्वरीः । शर्वरी रात्रयः । कालावयवानित्यर्थः । तानति स्कंदंति । अतिक्रम्य गच्छंति । नित्या इत्यर्थः । यस्मादेवं एवं विधास्तस्मान्म-रुतामधामुना महस्तेजो दिवि द्युलोके क्षमा क्षमायां भूमौ च वर्तमानं मन्महे । स्तुमः ॥

॥ अथ चतुर्थी ॥

मरुत्सु वो दधीमहि स्तोमं यज्ञं च धृष्णुया ।

विश्वे ये मानुषा युगा पांति मर्त्यं रिषः ॥ ४

मरुत्ऽसु । वः । दधीमहि । स्तोमं । यज्ञं । च । धृष्णुऽया ।

विश्वे । ये । मानुषा । युगा । पांति । मर्त्यं । रिषः ॥ ४

हे अध्वर्युहोत्रादयो वो यूयं मरुत्सु धृष्णुया धर्षकेषु दधीमहि ॥ व्यत्ययेनोत्तमः ॥ धत्त । किं । स्तोमं स्तोत्रं यज्ञं च । इज्यतेऽनेनेति यज्ञं हविः । तदुभयं क्रियार्थं दोग्धत इति । ये मरुतो विश्वे सर्वेऽपि मानुषा मानुषाणि युगा युगानि । सर्वेषु कालेष्वित्यर्थः । मर्त्यं मरणधर्माणं यजमानं रिषो हिंसकात्पापात्पांति रक्षंति ॥

॥ अथ पंचमी ॥

अर्हंतो ये सुदानवो नरो असामिशवसः।

प्र यज्ञं यज्ञियेभ्यो दिवो अर्चा मरुद्भ्यः॥ ५

अर्हंतः। ये। सुऽदानवः। नरः। असामिऽशवसः।

प्र। यज्ञं। यज्ञियेभ्यः। दिवः। अर्च। मरुत्ऽभ्यः॥ ५

हे स्तोतः हे आत्मन् वा येऽर्हंतः पूज्याः सुदानवः शोभनदाना नरो नेतारः कर्मणामसामिशवसोऽनल्पबलाः संति तेभ्यो यज्ञियेभ्यो यज्ञार्हेभ्यो दिवो द्योतमानेभ्यो मरुद्भ्यः॥ विभक्तिवचनयोर्व्यत्ययः॥ यद्वा कर्मणि षष्ठी॥ दीप्तं यज्ञं यज्ञसाधनं हविः प्रार्च। पूजय। प्रयच्छेत्यर्थः। अथवा दिवोऽन्तरिक्षादागतेभ्य इति संबंधः॥

॥ इति चतुर्थस्य तृतीयेऽष्टमो वर्गः॥

॥ अथ षष्ठी ॥

आ रुक्मैरा युधा नर ऋष्वा ऋष्टीरसृक्षत।

अन्वेनाँ अह विद्युतो मरुतो जझ्झतीरिव भानुरर्त त्मना दिवः॥

आ। रुक्मैः। आ। युधा। नरः। ऋष्वाः। ऋष्टीः।

असृक्षत।

अनु। एनान्। अह। विऽद्युतः। मरुतः। जझ्झतीःऽइव।

भानुः। अर्त। त्मना। दिवः॥ ६

नरो नेतार ऋष्वा महांतो मरुतो रुक्मै रोचमानैराभरणविशेषैरा रोचंत इति शेषः॥ उपसर्गश्रुतेः संगतक्रियाध्याहारः॥ तथा युधा प्रहरणसाधनेनायुधेना रोचंते। एते मरुत ऋष्टीरायुधविशेषानसृक्षत। प्रक्षिपंति मेघभेदार्थं एतान्मरुतो विद्युतोऽपि जझ्झतीरिव शब्दकारिण्य आप इव। जझ्झतीरापो भवंति शब्दकारिण्यः। निरु० ६, १६, इति निरुक्तं। अन्वह अनुगच्छंत्येव। दिवो द्योतमानस्य मरुद्गणस्य भानुर्दीप्तिस्त्मना स्वयमेवार्त। निरगात्॥

महः । द्रुहः । अप । विश्वऽआयु । धायि । वज्रस्य । यत् ।

पतने । पादि । शुष्णः ।

उरु । सः । सऽरथं । सारथये । कः । इंद्रः । कुत्साय ।

सूर्यस्य । सातौ ॥ ५

यद्यदा स शुष्णोऽसुरो वज्रस्य पतने पाते पादि अगच्छत् । अम्रियतेत्यर्थः । तदा महो महतो द्रुहो द्रोग्धुः शुष्णस्य संबंधि विश्वायु सर्वगतं । बलमिति शेषः । अपधायि । अपहितमकारि । तिरस्कृतमित्यर्थः । स इंद्रः सारथये सारथिभूताय कुत्साय सरथं समानरथं सूर्यस्य सातौ भजने निमित्तभूते उरु विस्तीर्णं यथा भवति तथा कः । अकरोत् । ... । कुत्सार्थमिंद्रोऽसुरं शुष्णं जिघांसुः कुत्समात्मनः सारथिं कल्पयित्वा । अत्र यतं शुष्णमहंस्तत्र कुत्सस्य रथं बहुधा अकारीत्यर्थोऽभ्युच्यत इति ॥

॥ इति चतुर्थस्य षष्ठे नवमो वर्गः ॥

॥ अथ षष्ठी ॥

प्र श्येनो न मंदिरमंशुमस्मै शिरो दासस्य नमुचेर्मथायन् ।

प्रावन्नमीं साप्यं ससंतं पृणग्राया समिषा सं स्वस्ति ॥ ६

प्र । श्येनः । न । मदिरं । अंशुं । अस्मै । शिरः । दासस्य ।

नमुचेः । मथायन् ।

प्र । आवत् । नमीं । साप्यं । ससंतं । पृणक् । राया । सं ।

इषा । सं । स्वस्ति ॥ ६

श्येनः सुपर्णः । नेत्ययं शब्दः समुच्चये वर्तते । अस्मा इंद्राय मदिरं मदकरमंशुं सोमं । प्रेति चाहरदित्यस्यार्थे वर्तते । आहरत् । उपसर्गदर्शनाद्योग्याक्रियाध्याह्रियते । किं चायमिंद्रोऽपि दासस्य मायिनः उपक्षपयितुर्नमुचेरेतन्नाम्नोऽसुरस्य शिरः शीर्षं मथायन् मंथनं कुर्वन् साप्यं सप्यस्य पुत्रं ससंतं स्वपंतं नमीमेतन्नामकमृषिं प्रावत् । प्रारक्षत् । ... राया पश्वादिधनेनेषान्नेन च तमृषिं संपृणक् । समयोजयत् ॥

॥ अथ सप्तमी ॥

वि पिप्रोरहिमायस्य दृळ्हाः पुरो वज्रिञ्छवसा न दर्दः ।
सुदामन्तद्रेक्णो अप्रमृष्यमृजिश्वने दात्रं दाशुषे दाः ॥ ७

वि । पिप्रोः । अहिऽमायस्य । दृळ्हाः । पुरः । वज्रिन् ।
शवसा । न । दर्दरिति दर्दः ।
सुऽदामन् । तत् । रेक्णः । अप्रऽमृष्यम् । ऋजिश्वने । दात्रम् ।
दाशुषे । दाः ॥ ७

हे वज्रिन् वज्रवन्निंद्र त्वमहिमायस्याहंत्र्यो माया यस्य पिप्रोरेतन्नाम्नोऽसुरस्य संबंधिनीर्दृळ्हा दृढानि पुरः प्राकारादीनि दुर्गाणि शवसा बलेन विदर्दः । विदारितवानसि । नेति पादपूरणः । त्वं पिप्रोर्नृमणः प्रारुजः पुरः । ऋग्वे० १. ५१. ५. । शतं पूर्भिरायसीभिर्नि पाहि । ऋग्वे० ७. ३. ७. । इति दर्शनात् । अपि च हे सुदामन् शोभनदानेंद्र त्वं दात्रं हविर्लक्षणं धनं दाशुषे दत्तवत ऋजिश्वन एतन्नामकाय राजर्षयेऽप्रमृष्यं शत्रुभिरबाध्यं तत्तादृशं प्रभूतं रेक्णो धनं दाः । अदाः । दत्तवानसि ॥

॥ अथाष्टमी ॥

स वेतसुं दशमायं दशोणिं तूतुजिमिंद्रः स्वभिष्टिसुम्नः ।
आ तुग्रं शश्वदिभं द्योतनाय मातुर्न सीमुप सृजा इयध्यै ॥ ८

सः । वेतसुम् । दशऽमायम् । दशऽओणिम् । तूतुजिम् । इंद्रः ।
स्वभिष्टिऽसुम्नः ।
आ । तुग्रम् । शश्वत् । इभम् । द्योतनाय । मातुः । न । सीम् ।
उप । सृज । इयध्यै ॥ ८

स्वभिष्टिसुम्नः सुष्ठ्वभिगन्तव्यान्यभिगम्यानि सुम्नानि सुखानि येन देयानि स इंद्रो दशमायं बहुविधमायं वेतसुं वेतसुनामानमसुरं दशोणिं चैतन्नामकं च तूतुजिं तूतुजिनामकं

हे इंद्र धुनिः शत्रूणां कंपयिता त्वं धुनिमतीर्ध्वनिमतीरपो वायु निरोधकतया विसृजसि । अप उदकानि सीरा न नदीरिव स्रवंतीः प्रवहंतीर्ऋणोः । अगमयः । धुनिं कृत्वा तेन निरोधितान्युदकानि प्रवाहयसीत्यर्थः । हे शूर वीरेंद्र यद्यदा समुद्रमति अतिक्रम्य पर्षि पारयसि तदा समुद्रपारे तिष्ठंतौ तुर्वशं यदुं च पारय । अपारयः । समुद्रमतारयः ॥

॥ अथ त्रयोदशी ॥

तव ह त्यदिंद्र विश्वमाजौ सस्तो धुनीचुमुरी या ह सिष्वप् ।
दीदयदित्तुभ्यं सोमेभिः सुन्वन्दभीतिरिध्मभृतिः पक्थ्य१र्कैः ॥१३

तव । ह । त्यत् । इंद्र । विश्वं । आजौ । सस्तः ।
धुनीचुमुरी इति । या । ह । सिष्वप
दीदयत् । इत् । तुभ्यं । सोमेभिः । सुन्वन् । दभीतिः ।
इध्मभृतिः । पक्थी । अर्कैः ॥ १३

हे इंद्र आजौ संग्रामे तव ह तवैव विश्वं व्याप्तं त्यत्तत् इदं कर्म भवति । कीदृशमिति तदुच्यते । या यौ धुनीचुमुरी । धुनिश्च चुमुरिश्चैतन्नामकावसुरौ । सिष्वप् स्वापयः तावसुरौ सस्तः । संग्रामे शयानौ हतावित्यर्थः ॥ भूतार्थे व्यत्ययेन लट् । द्वितीयो हशब्दः पादपूरणः ॥ तदनंतरं हे इंद्र तुभ्यं त्वदर्थं सुन्वन् सोमानभिषुण्वन् पक्थी पक्तव्यान् हवींषि पक्तवानिध्मभृतिरिध्मानां भर्ता वा दभीतिनामा राजर्षिः सोमेभिः सोमैरर्कैर्हविर्लक्षणैरन्नैर्दीदयदित् । दीप्यत एव । धुनिं चुमुरिं तस्मै अवधीत्यर्थः । त्वं नि दस्युं चुमुरिं धुनिं चेति हि दर्शनात् ॥

॥ इति चतुर्थस्य षष्ठे सप्तमो वर्गः ॥

इमा उ त्वेति द्वादशर्चं षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं । नवम्येकादश्यौ च वैश्वदेव्यौ । तथा चानुक्रम्यते । इमा उ द्वादश नवम्येकादश्यौ वैश्वदेव्याविति ॥ अपवृध्यमानाख्य एकाह इदं सूक्तं मरुत्वतीयनिविद्धानं । सूत्रितं च । इमा उ त्वा य एक इदिति मध्यंदिनः । आ० ८. ७. । इति ॥ इंद्राविष्णुरोजस्कांतिनाम्न्येकाहेऽप्येदं मरुत्वतीयनिविद्धानं । सूत्रितं च । इमा उ त्वा यो न इंद्रेति मध्यंदिनः ।

आ० ६. ७. । इति ॥ अर्हं ते कृदं सोऽपि मद्दलीव इदं सूक्तं । अनित्यं च । प्र
इंहिम इत्या च त्येति महदतीयं । आ० ८. ७. । इति ॥

। तत्र प्रथमा ॥

इमा उं त्वा पुरुतमस्य कारोर्हव्यं वीर हव्या हवंते ।

धियो रथेष्ठामजरं नवीयो रयिर्विभूतिरीयते वचस्या ॥ १

इमाः । ऊं इति । त्वा । पुरुऽतमस्य । कारोः । हव्यं ।

वीर । हव्याः । हवंते ।

धियः । रथेऽस्थां । अजरं । नवीयः । रयिः । विऽभूतिः ।

ईयते । वचस्या ॥ १

पुरुतमस्य बहूनां कामं कांक्षतः ॥ तमु अभिकांक्षायामिति धातुः ॥ कारोः
स्तोतुर्मम संबंधिन्यो हव्याः स्तुत्याः प्रयत्नाः इमा धियः स्तुतयो हे वीर
शूरेंद्र हव्यं त्वा त्वां हवंते । स्तुवंति । कीदृशं । रथेष्ठां रथे स्थितमजरं जरारहितं
नवीयो नवीयांसं नवतरं । च इति पूरणः । अपि च वचस्या स्तुत्या अस्मा विभूति-
र्महतो विभवहेतू रयिश्चित्तं धनमीयते । त्वामभिगच्छति ॥

। अथ द्वितीया ॥

तमुं स्तुष इंद्रं यो विदानो गिर्वाहसं गीर्भिर्यज्ञवृद्धं ।

यस्य दिवमति मह्ना पृथिव्याः पुरुमायस्य रिरिचे महित्वं ॥ २

तं । ऊं इति । स्तुषे । इंद्रं । यः । विदानः । गिर्वाहसं ।

गीःऽभिः । यज्ञऽवृद्धं ।

यस्य । दिवं । अति । मह्ना । पृथिव्याः । पुरुऽमायस्य ।

रिरिचे । महिऽत्वं ॥ २

स इंद्रो विद्वान् सर्वं विद्वान् सर्वैः स्तूयमानो वा गिर्वाहसं गीर्भिर्वहनीयं यज्ञ-वृधं यज्ञैः प्रवृद्धं तमु तमेवेंद्रं स्तुषे । स्तुवे । पुरुमायस्य बहुप्रज्ञस्य बहुकर्मणस्य वा यस्येंद्रस्य महित्वं माहात्म्यं दिवं दिवो द्युलोकात् ॥ पंचम्यर्थे द्वितीया ॥ पृथिव्या भूलोकात् ज्मः । महिना । रिरिचे अतिरिच्यते तं स्तुष इति संबंधः ॥

॥ अथ तृतीया ॥

स इत्तमोऽवयुनं ततन्वत्सूर्येण वयुनवच्चकार ।

कदा ते मर्ता अमृतस्य धामेयक्षंतो न मिनंति स्वधावः ॥ ३

सः । इत् । तमः । अवयुनं । ततन्वत् । सूर्येण । वयुनऽवत् ।
चकार ।

कदा । ते । मर्ताः । अमृतस्य । धाम । इयक्षंतः । न ।
मिनंति । स्वधाऽवः ॥ ३

स इत् स एवेंद्रोऽवयुनमप्रज्ञानं । प्रज्ञाननाशकमित्यर्थः । ततन्वत् तमसा विस्तीर्ण-मानं तमोऽन्धकारं दिवि सूर्येण दिव्यार्थं यितेन देवेन वयुनवत् प्रकाशवच्चकार । कृतवान् । परोऽर्धर्चः प्रत्यक्षकृतः । हे स्वधावो बलवन्निंद्र मर्ता मनुष्या अमृतस्य नित्यस्य ते त्वदीयं धाम कर्मोपायं स्थानं । तत्स्थानं देवानित्यर्थः । इयक्षंतो यष्टुमिच्छंतः कदा कदाचित् । सर्वदेत्यर्थः । न मिनंति किमपि प्राणिजातं न हिंसंति ॥

॥ अथ चतुर्थी ॥

यस्ता चकार स कुह स्विदिंद्रः कमा जनं चरति कासु विक्षु ।

कस्ते यज्ञो मनसे शं वराय को अर्क इंद्र कतमः स होता ॥ ४

यः । ता । चकार । सः । कुह । स्वित् । इंद्रः । कं ।
आ । जनं । चरति । कासु । विक्षु ।

कः । ते । यज्ञः । मनसे । शं । वराय । कः । अर्कः । इंद्र ।
कतमः । सः । होता ॥ ४

य इंद्रस्तान्युक्तप्रसिद्धानि वृत्रवधादीनि कर्माणि चकार अकरोत् स इंद्रोऽद्य कुह क्वित् क्व क्रियते कं जनं कर्माणि ...यथा ति काश्चित् प्रजासु वर्तते इतीदृश विभूतिमत्त्वान्न निर्वक्तुं शक्यं । अथ प्रत्यक्षस्तुतिः । हे इंद्र कः कोऽपि यज्ञस्ते तव मनसे प्रीतये सुखकरो भवति । वराय तव वरणाय कः कोऽप्यर्को मंत्रः समर्थो भवति । कः होता तव वरणाय यः समर्थो भवति स होता कश्चन भवति ॥

॥ अथ पंचमी ॥

इदा हि ते वेविषतः पुराजाः प्रत्नास आसुः पुरुकृत्सखायः ।
ये मध्यमास उत नूतनास उतावमस्य पुरुहूत बोधि ॥ ५

इदा । हि । ते । वेविषतः । पुराऽजाः । प्रत्नासः । आसुः ।
पुरुऽकृत् । सखायः ।
ये । मध्यमासः । उत । नूतनासः । उत । अवमस्य ।
पुरुऽहूत । बोधि ॥ ५

पुराजाः पूर्वस्मिन्काले जाताः प्रत्नासः पुराणा अंगिरःप्रभृतय इदा इदानीमिव । इवशब्द उपमार्थे वर्तते । वेविषतः कर्माणि प्राप्नुवंतो हे पुरुकृत् बहूनां कर्मणां कर्तरिंद्र ते तव सखायः स्तोतार आसुः । बभूवुः । ये मध्यमासो मध्यमकालजाता उतापि च ये नूतनासोऽद्यतना यजमानास्तेऽपि सर्वे ते स्तोतारो बभूवुः अतः कारणा-दुतापि चावमस्यावाचीनस्य ममापि स्तोत्रं हे पुरुहूत बहुभिराहूतेंद्र त्वं बोधि । बुध्यस्व ॥

॥ इति चतुर्थस्य पंचम एकादशो वर्गः ॥

॥ अथ षष्ठी ॥

तं पृच्छंतोऽवरासः पराणि प्रत्ना त इंद्र श्रुत्यानु येमुः ।
अर्चामसि वीर ब्रह्मवाहो यादेव विद्म तात्त्वा महांतं ॥ ६

तं । धृष्णुऽवंतः । अवरासः । पराणि । प्रत्ना । ते । इंद्र ।
श्रुत्या । अनुं । येमुः ।
अर्चामसि । वीर । ब्रह्मऽवाहः । यात् । एव । विद्म । तात् ।
त्वा । महांतं ॥ ६

हे वीर शूर ब्रह्मवाहो ब्रह्मभिर्मंत्रैर्वहनीयेंद्र अवरासोऽर्वाचीना मनुष्यास्तत्तद्गुणापेतं त्वां धृष्णुंतोऽर्चंतः ॥ धृष्णुरित्यर्चतिकर्मा ॥ पराणि प्रकृष्टानि प्रत्ना प्रत्नानि पुराणानि श्रुत्या श्रुत्यानि श्रोतव्यानि ते त्वदीयानि कर्माण्यनुयमुः । अनुयमनं नियमनं । स्तुतिरूपाभिर्वाग्भिर्नियमयंतु । तथा वयमपि महांतं प्रभूतं त्वा त्वामर्चामसि । अर्चामः । स्तुमः । यादेव यान्येव कर्माणि विद्म जानीमः तानि कर्मभिः स्तुम इति संबंधः ॥

॥ अथ सप्तमी ॥

अभि त्वा पाजो रक्षसो वि तस्थे महि जज्ञानमभि तत्सु तिष्ठ ।
तव प्रत्नेन युज्येन सख्या वज्रेण धृष्णो अप ता नुदस्व ॥ ७

अभि । त्वा । पाजः । रक्षसः । वि । तस्थे । महि । जज्ञानं ।
अभि । तत् । सु । तिष्ठ ।
तव । प्रत्नेन । युज्येन । सख्या । वज्रेण । धृष्णो इति ।
अप । ता । नुदस्व ॥ ७

रक्षसो रक्षसः संबंधि पाजः सेनालक्षणं बलं हे इंद्र त्वाभि त्वामभिमुखं वितस्थे । प्रतिष्ठते । तथा त्वमपि महि महज्जज्ञानं प्रादुर्भवत्तद्बलमभि अभिमुखः सन् सु सुष्ठु तिष्ठ । स्थिरो भव । स्थित्वा च हे धृष्णो शत्रूणां धर्षकेंद्र तव त्वदीयेन वज्रेण ता तद्बलमपनुदस्व । अपगतं प्रेरय । लिंगव्यत्ययः । कीदृशेन । प्रत्नेन पुराणेन युज्येन योज्येन सख्या नित्यसहायेन ॥

॥ अथाष्टमी ॥

स तु श्रुधींद्र नूतनस्य ब्रह्मण्यतो वीर कारुधायः।

त्वं ह्याऽपिः प्रदिवि पितॄणां शश्वद्बभूथ सुहव एष्टौ॥ ८

सः। तु। श्रुधि। इंद्र। नूतनस्य। ब्रह्मण्यतः। वीर।

कारुऽधायः।

त्वं। हि। आपिः। प्रऽदिवि। पितॄणां। शश्वत्। बभूथ।

सुऽहवः। आऽइष्टौ॥ ८

हे कारुधायः कारूणां स्तोतॄणां धारक हे वीरेंद्र स प्रसिद्धस्त्वं नूतनस्येदानींतनस्य ब्रह्मण्यतो ब्रह्म स्तोत्रं कर्तुमिच्छतो मम स्तोत्रं तु क्षिप्रं श्रुधि। शृणुष्व। यस्मात्कारणात् हे इंद्र त्वमेष्टावायजनेऽभिगमने वा सति सुहवः शोभनाह्वानः सन् प्रदिवि पूर्वस्मिन्काले पितॄणामंगिरसामापिर्बंधुः शश्वच्चिरकालं बभूथ अभूः तस्मात्कारणादिदानीं मां त्वं श्रुधीति संबंधः॥

॥ अथ नवमी ॥

प्र ऊतये वरुणं मित्रमिंद्रं मरुतः कृष्वावसे नो अद्य।

प्र पूषणं विष्णुमग्निं पुरंधिं सवितारमोषधीः पर्वतांश्च॥ ९

प्र। ऊतये। वरुणं। मित्रं। इंद्रं। मरुतः। कृष्व। अवसे।

नः। अद्य।

प्र। पूषणं। विष्णुं। अग्निं। पुरंऽधिं। सवितारं।

ओषधीः। पर्वतान्। च। ९

अनयापि विश्वे देवाः स्तूयंते। हे भरद्वाज अद्येदानीं वरुणं राज्याभिमानिनं च मित्रमहरभिमानिनं चेंद्रं च प्रसिद्धं मरुतो मरुद्गणांश्च नोऽस्माकमूतये तर्पणायावसे

रक्षणाय च प्रज्ञप्य। अभिलक्ष्यीकुरुष्व। किंच पूषणमेतन्नामकं च विष्णुं सर्वव्यापिनं देवं च पुरंधिं पुरुधियं पुरुकर्माणमग्निं च सवितारं सर्वस्य प्रेरकं देवमोषधीरोषध्यभिमानिनीर्देवान् पर्वतांश्चाद्रीनित्येतान् देवानस्माकं तर्पणाय रक्षणाय च प्रज्ञप्य। ज्ञाप्याभिलक्ष्यीकुरु॥

॥ अथ दशमी॥

इम उ त्वा पुरुशाक प्रयज्यो जरितारो अभ्यर्चंत्यर्कैः।

श्रुधी हवमा हुवतो हुवानो न त्वावाँ अन्यो अमृत

त्वदस्ति॥ १०

इमे। ऊं इति। त्वा। पुरुऽशाक। प्रयज्यो इति प्रऽयज्यो।

जरितारः। अभि। अर्चंति। अर्कैः।

श्रुधि। हवं। आ। हुवतः। हुवानः। न। त्वाऽवान्। अन्यः।

अमृत। त्वत्। अस्ति।

हे पुरुशाक बहुशक्ते हे प्रयज्यो प्रकर्षेण यजनीयेंद्र त्वा त्वामिमे जरितारः स्तोतारोऽर्कैरर्चनीयैः स्तोत्रैरभ्यर्चंति। अभिष्टुवंति। तथा हे अमृत अमरणधर्मेंद्र हुवानः हूयमानस्त्वमाहुवतोऽभिहुवतो मम हवं स्तोत्रं श्रुधि। शृणु। किंच त्वावान् त्वत्सदृशो देवस्त्वदन्यो नास्ति॥

॥ अथैकादशी॥

नू म आ वाचमुप याहि विद्वान्विश्वेभिः सूनो सहसो यजत्रैः।

ये अग्निजिह्वा ऋतसाप आसुर्ये मनुं चक्रुरुपरं दसाय॥ ११

नु। मे। आ। वाचं। उप। याहि। विद्वान्। विश्वेभिः।

सूनो इति। सहसः। यजत्रैः।

ये। अग्निऽजिह्वाः। ऋतऽसापः। आसुः। ये। मनुं। चक्रुः।

उपरं। दसाय॥ ११

इयं च वैश्वदेवीत्युक्तं। हे सहसः सूनो बलस्य पुत्रेंद्र विद्वान् सर्वमवगच्छन् यजत्रैर्यजनीयैर्विश्वेभिः सर्वैर्देवैः सह तु क्षिप्रं मे मदीया वाचः स्तुतिरूपाणि वचांस्युपाभि आयाहि । आगच्छ । एवंभूतमिंद्रं प्रार्थयत ऐंद्रत्वात्सूक्तस्य । ये देवा अग्निजिह्वाः । अग्निर्जिह्वास्थानीयो येषां ते । ऋतसाप ऋतं यज्ञं स्पृशंत आसुर्भवंति ये च देवा इस्ताय दस्यूनामुपक्षेपणाय मनुं राजर्षिमुपरं दस्यूनामुपरिभवं चक्रुः कृतवंतः तैः सहागच्छेति पूर्वेण संबंधः ॥

॥ अथ द्वादशी ॥

स नो बोधि पुरएता सुगेषूत दुर्गेषु पथिकृद्विदानः ।
ये अश्रमास उरवो वहिष्ठास्तेभिर्न इंद्राभि वक्षि वाजं ॥ १२

सः । नः । बोधि । पुरःऽएता । सुऽगेषु । उत । दुःऽगेषु ।
पथिऽकृत् । विदानः ।
ये । अश्रमासः । उरवः । वहिष्ठाः । तेभिः । नः । इंद्र ।
अभि । वक्षि । वाजं ॥ १२

हे इंद्र पथिकृत् पथां कर्ता विदानः सर्वं विद्वान् स त्वं सुगेषु सुखेन गंतव्येषु मार्गेषु च दुर्गेषु दुःखेन गंतव्येषु च मार्गेषु नोऽस्माकं पुरएता पुरो गंता बोधि । भव ॥ बोधीति भवतेर्लोटि मध्यमपुरुषैकवचनस्य छांदसं रूपं ॥ अश्रमासः अश्रमरहिता उरवो महांतो वहिष्ठा वोढृतमाश्च येऽश्वाः संति हे इंद्र तेभिस्तैरश्वैर्नोऽस्मभ्यं वाजमन्नमभिवक्षि । अभिवह ॥

॥ इति चतुर्थस्य षष्ठे द्वादशो वर्गः ॥

य एक इदित्येकादशर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं । तथा चानुक्रांतं । य एक इदेकादशेति ॥ आभिप्लविके प्रथमेऽहनि दशरात्रस्य प्रथमेऽहनि च माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रेऽहीनसूक्तस्य स्थाने त्रीणि संपातसूक्तानि । तेष्विदं द्वितीयं सूक्तं । सूत्रितं च । य एक इद्यस्तिग्मशृंगः । आ० ७. ५. । इति ॥ उपहव्याख्ये एकाहेऽपीदं निष्केवल्यनिविद्धानं । सूत्रितं च । य एक इदिति मध्यंदिनः । आ० ९. ७. । इति ॥

॥ तत्र प्रथमा ॥

य एक इद्धव्यश्चर्षणीनामिंद्रं तं गीर्भिरभ्यर्च आभिः ।

यः पत्यते वृषभो वृष्ण्यावान्सत्यः सत्वा पुरुमायः सहस्वान् ॥ १

यः । एकः । इत् । हव्यः । चर्षणीनां । इंद्रं । तं ।

गीःऽभिः । अभि । अर्च । आभिः ।

यः । पत्यते । वृषभः । वृष्ण्यऽवान् । सत्यः । सत्वा ।

पुरुऽमायः । सहस्वान् ॥ १

य इंद्रश्चर्षणीनां मनुष्याणामापत्स्वेक इदेक एव हव्यो ह्वातव्य आभिर्गीर्भिः स्तुतिरूपाभिर्वाग्भिस्तमिंद्रमभ्यर्च । अभिष्टौमि । य इंद्रः पत्यते स्तोतॄनभिगच्छति । यद्वा पत्यते लोकानामीष्टे । कीदृशः । वृषभः कामानां वर्षिता वृष्ण्यावान्बलवान् सत्योऽविसंवादी सत्वा शत्रूणां सादयिता कामानां दाता वा ॥ सदेवो सन् तेनेदं रूपं ॥ पुरुमायो बहुप्रज्ञः सहस्वानभिभवनवान् तमिंद्रमभिष्टौमीति संबंधः ॥

॥ अथ द्वितीया ॥

तमु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयंतः ।

नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठं ॥ २

तं । ऊं इति । नः । पूर्वे । पितरः । नवऽग्वाः । सप्त ।

विप्रासः । अभि । वाजयंतः ।

नक्षत्ऽदाभं । ततुरिं । पर्वतेऽस्थां । अद्रोघऽवाचं । मतिऽभिः ।

शविष्ठं ॥ २

पूर्वे प्रत्ना नवग्वा नवभिर्मासैः सत्रमनुतिष्ठंतः सप्त सप्तसंख्याका विप्रासो विप्रा मेधाविनो वाजयंतो वाजमन्नं हविर्लक्षणमिंद्रस्य कुर्वंतः । इंद्रं वा वाजिनं बलिनं कुर्वंतः । तत्करोतीति णिच् ॥ एवंभूता नोऽस्माकं पितरोऽङ्गिरसस्तमेवेंद्रं मतिभिः

स्तुतिभिरभि। ववृधुरिति शेषः। कीदृशं। नवग्वासं ॥ नवतिर्गतिकर्मा ॥ अभि-गच्छतां मनूनां दंभितारं हिंसितारं सहुरिं तरितारं पर्वतेष्ठां पर्वतेष्ववस्थित-मद्रं वज्रार्थं। अद्रोघवाचं। अतिक्रमणीया वागाज्ञारूपा यस्य तं। मतिभिः वत्सयतुं ॥

॥ अथ तृतीया ॥

तमीमह इंद्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः।

यो अस्कृधोयुरजरः स्वर्वान्तमा भर हरिवो मादयध्यै ॥ ३

तं। ईमहे। इंद्रं। अस्य। रायः। पुरुऽवीरस्य। नृऽवतः।

पुरुऽक्षोः।

यः। अस्कृधोयुः। अजरः। स्वःऽवान्। तं। आ। भर।

हरिऽवः। मादयध्यै ॥ ३

पुरुवीरस्य बहुपुत्रपौत्रयुक्तस्य नृवतः परिचारकजनसहितस्य पुरुक्षोर्बहुन्नस्य बहुपशोर्वास्य राय इदं धनं ॥ द्वितीयार्थे षष्ठी ॥ तमिंद्रमीमहे। याचामहे। यो रयिरस्कृधोयुरविच्छिन्नोऽजरो जराहानिरहितः स्वर्वान् सुखयुक्तो हे हरिवो हरिवन् अस्मदीयाश्वोपेतेंद्र त्वं तं रयिं मादयध्यै। अस्मान्मादयितुमाभर। आहर ॥

॥ अथ चतुर्थी ॥

तन्नो वि वोचो यदि ते पुरा चिज्जरितार आनशुः सुम्नमिंद्र।

कस्ते भागः किं वयो दुध्र खिद्वः पुरुहूत पुरूवसोऽसुरघ्नः ॥ ४

तत्। नः। वि। वोचः। यदि। ते। पुरा। चित्।

जरितारः। आनशुः। सुम्नं। इंद्र

कः। ते। भागः। किं। वयः। दुध्र। खिद्वः। पुरुऽहूत।

पुरूवसो इति पुरुऽवसो। असुरऽघ्नः ॥ ४

हे इंद्र यदि ते तव पुरा चित्पूर्वस्मिन्काले जरितारः स्तोतारः सुम्नं सुखमानशुः तत्सुखं नोऽस्माकं विवोचः। विब्रूहि। दुध्र दुर्धर हे खिद्वः शत्रूणां खेदयितर्वै पुरुहूत हे पुरुवसो इंद्र असुरघ्नोऽसुराणां हंतुस्ते तव अत्रेतु को भागः क्षमः। वयो हविर्लक्षणमन्नं किं क्षमं। यदि केचिज्जरितारः पूर्वकालेऽपि त्वत्तः सकाशात्सुखं लेभिरे तद्वयमपि तत्सुखं लभामहे इति विचार्य सुखप्राप्तिविलंबो ममासोढव्यो भवेदित्यर्थः॥

। अथ पंचमी।

तं पृच्छंती वज्रहस्तं रथेष्ठामिंद्रं वेपी वक्वरी यस्य नू गीः।
तुविग्राभं तुविकूर्मिं रभोदां गातुमिषे नक्षते तुम्रमच्छ॥ ५

तं। पृच्छंती। वज्रऽहस्तं। रथेऽस्थां। इंद्रं। वेपी। वक्वरी। यस्य। नु। गीः।
तुविऽग्राभं। तुविऽकूर्मिं। रभःऽदां। गातुं। इषे। नक्षते। तुम्रं। अच्छ॥ ५

पूर्वेषामस्य इंद्र स्तवये कामानदायच्छत् ततः स कामपूर्णं करिष्यति। वज्रहस्तं वज्रपाणिं रथेष्ठां रथे स्थितं तमिंद्रं पृच्छंती अर्चयंती॥ पृच्छतिरर्चतिकर्मा॥ वेपी। वेपो यागादिलक्षणं कर्म। तद्वती वक्वरी गुणानां वक्त्री गीरीदृशी स्तुतिर्यस्य यजमानस्य भवति। कीदृशमिंद्रं पृच्छंती। तुविग्राभं तुवीनां बहूनां ग्रहीतारं तुविकूर्मिं बहुकर्माणं रभोदां रभसो बलस्य दातारं। नु इति पूरणः। स यजमानो गातुं सुखमिषे। गच्छति। किंच तुम्रं प्लापयितारं शत्रूणामभिमुखं नक्षते। गच्छति॥

॥ इति चतुर्थस्य षष्ठे त्रयोदशो वर्गः॥

॥ अथ षष्ठी॥

अया च त्यं मायया वावृधानं मनोजुवा स्वतवः पर्वतेन।
अच्युता चिद्वीळिता स्वोजो रुजो वि दृळ्हा धृषता विरप्शिन्॥ ६

अया । ह । त्यं । मायया । वावृधानं । मनःऽजुवा । स्वऽतवः ।
पर्वतेन ।
अच्युता । चित् । वीड़िता । सुऽओजः । रुजः । वि ।
दृड़्हा । धृषता । विऽरप्शिन् ॥ ६

हे स्वतवः स्वभूतबलेन्द्र त्वं मनोजुवा मनोवद्वेगवतानेन पर्वतेन वज्रपर्वणा स्वकीये-नायुधेन वज्रेण । वज्रेण शतपर्वणा । ऋ० १, ८०, ६, । इति दर्शनात् अयानया मायया वावृधानं वर्धमानं त्यं प्रसिद्धं वृत्रं व्यरुजः । विशेषेणाभाङ्क्षीः । तथा हे स्वोजः शोभनतेजो हे विरप्शिन् हे महन्निन्द्र त्वमच्युतान्यच्युतानि च्युतिरहि-तान्यपि वीड़िता वीड़ितान्यशिथिलाङ्गानि दृड़्हा दृढानि पुराणि धृषता धर्षकेण वज्रेण व्यरुजः । भग्नवानसि ॥

॥ अथ सप्तमी ॥

तं वो धिया नव्यस्या शविष्ठं प्रत्नं प्रत्नवत्परितंसयध्यै ।
स नो वक्षदनिमानः सुवह्मेन्द्रो विश्वान्यति दुर्गहाणि ॥ ७

तं । वः । धिया । नव्यस्या । शविष्ठं । प्रत्नं । प्रत्नऽवत् ।
परिऽतंसयध्यै ।
सः । नः । वक्षत् । अनिऽमानः । सुऽवह्मा । इन्द्रः । विश्वानि ।
अति । दुःऽगहानि ॥ ७

नव्यसा नवतरया धिया स्तुत्या शविष्ठं बलवत्तमं प्रत्नं पुराणं हे इन्द्र तं वस्त्वां प्रत्नवत् चिरंतना ऋषय इव परितंसयध्यै परितो विस्तारयितुं । अहं प्रवृत्तोऽस्मीति शेषः । अनिमानोऽपरिमाणः सुवह्मा शोभनवहनः स इन्द्रो विश्वानि समस्तानि दुर्गहाणि दुर्गाणि नोऽस्मानतिवक्षत् । अतिवहतु ॥

॥ अथाष्टमी ॥

आ जनाय द्रुह्वणे पार्थिवानि दिव्यानि दीपयोऽन्तरिक्षा ।
तपा वृषन्विश्वतः शोचिषा तान्ब्रह्मद्विषे शोचय क्षामपश्च ॥ ८

आ । जनाय । द्रुह्वणे । पार्थिवानि । दिव्यानि । दीपयः ।
अंतरिक्षा ।
तप । वृषन् । विश्वतः । शोचिषा । तान् । ब्रह्मऽद्विषे ।
शोचय । क्षां । अपः । च ॥ ८

हे इंद्र त्वं द्रुह्वणे साधुजनानां द्रोग्धुर्जनाय जनस्य राक्षसादेः ॥ षष्ठ्यर्थे चतुर्थी ॥ पार्थिवानि पृथिव्यां भवानि दिव्यानि दिवि भवान्यंतरिक्षांतरिक्षे भवानि च स्थानान्या दीपयः । आ समंतात्तापय । हे वृषन् कामानां वर्षितरिंद्र त्वं विश्वतः सर्वतो विद्यमानान् तान् राक्षसादीन् शोचिषा स्वदीयया दीप्त्या तप । दह । किंच ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे राक्षसाद्ये । ब्रह्मद्विषं दग्धुमित्यर्थः । क्षां पृथिवीमपश्चांतरिक्षं शोचय । दीपय । आप इत्यंतरिक्षनामैतत् ॥

॥ अथ नवमी ॥

भुवो जनस्य दिव्यस्य राजा पार्थिवस्य जगतस्त्वेषसंदृक् ।
धिष्व वज्रं दक्षिण इंद्र हस्ते विश्वा अजुर्य दयसे वि मायाः ॥ ९

भुवः । जनस्य । दिव्यस्य । राजा । पार्थिवस्य । जगतः ।
त्वेषऽसंदृक् ।
धिष्व । वज्रं । दक्षिणे । इंद्र । हस्ते । विश्वाः । अजुर्य ।
दयसे । वि । मायाः ॥ ९

हे त्वेषसंदृक् दीप्तदर्शनेंद्र दिव्यस्य दिवि भवस्य जनस्य राजेश्वरो भुवः । भवसि । जगतो जंगमस्य पार्थिवस्य च राजा । भवसि । दक्षिणे हस्ते वज्रं धिष्व ।

निवेषि। तेन च निशितेन वज्रेण विश्वाः सर्वा आसुरीर्माया भिदस्व। विदारय॥
इव दामनिविंशामनिरस्य बेध्यिति धातुः॥ हे इंद्र त्वं जरयितृणामयमिंद्र त्वमिति॥

॥ अथ दशमी ॥

आ संयतमिंद्र णः स्वस्तिं शत्रुतूर्याय बृहतीममृध्राम्।
यया दासान्यार्याणि वृत्रा करो वज्रिन्त्सुतुका नाहुषाणि॥ १०

आ। संऽयतं। इंद्र। नः। स्वस्तिं। शत्रुऽतूर्याय। बृहतीं। अमृध्रां।
यया। दासानि। आर्याणि। वृत्रा। करः। वज्रिन्। सुऽतुका। नाहुषाणि॥ १०

हे इंद्र शत्रुतूर्याय शत्रूणां तारणाय बृहतीं महतीममृध्रामहिंसितां संयतं संयतीं संगच्छमानां स्वस्तिं क्षेमलक्षणां संपदं हे इंद्र नोऽस्मभ्यमाभर। वज्रिन्वज्रवन्निंद्र यया सत्या दासानि कर्महीनानि मनुष्यजातान्यार्याणि कर्मयुक्तानि करः अकरोः। नाहुषाणि मनुष्यसंबंधीनि। नहुषा इति मनुष्यनामैतत्। वृत्रा वृत्राणि शत्रून् सुतुका सुतुकानि शोभनहिंसोपेतान्यकरोः॥

॥ अथैकादशी ॥

स नो नियुद्भिः पुरुहूत वेधो विश्ववाराभिरा गहि प्रयज्यो।
न या अदेवो वरते न देव आभिर्याहि तूयमा मद्र्यद्रिक्॥ ११

सः। नः। नियुत्ऽभिः। पुरुऽहूत। वेधः। विश्वऽवाराभिः।
आ। गहि। प्रयज्यो इति प्रऽयज्यो।
न। याः। अदेवः। वरते। न। देवः। आ। आभिः।
याहि। तूयं। आ। मद्र्यद्रिक्॥ ११

यजमानाय लोकं स्थानं कर्ता। दातेत्यर्थः। उ इति पादपूरणः। स्तुवते सोमं कुर्वते कीरये चित्॥ चिदिति चार्थे॥ स्तोत्रे च। कीरिरिति स्तोतृनामैतत्। वसु धनं दाता स्तु॥

। अथ चतुर्थी ।

गंतेयांति सवना हरिभ्यां बभ्रिर्वज्रं पपिः सोमं ददिर्गाः।
कर्ता वीरं नर्यं सर्ववीरं श्रोता हवं गृणतः स्तोमवाहाः॥ ४

गंता। इयंति। सवना। हरिऽभ्यां। बभ्रिः। वज्रं। पपिः।
सोमं। ददिः। गाः।
कर्ता। वीरं। नर्यं। सर्वऽवीरं। श्रोता। हवं। गृणतः।
स्तोमऽवाहाः॥ ४

इंद्रो हरिभ्यां स्वकीयाभ्यामश्वाभ्यामियंति हृदयस्थानि त्रीणि सवना सवनानि गंता गमनशीलो भवतु। कीदृशः। वज्रं स्वकीयमायुधं बभ्रिर्भर्ता धारकः सोममभिषुतं पपिः पाता गा ददिर्दाता नर्यं मनुष्यहितं सर्ववीरं बहुपुत्रोपेतं वीरं पुत्रं कर्ता यजमानाय दाता गृणतः स्तुवतः स्तोतुः संबंधि हवं स्तोत्रं श्रोता स्तावकः स्तोमवाहाः स्तोमैः स्तोत्रैर्वहनीयः॥

। अथ पंचमी ।

अस्मै वयं यद्वावान तद्विविष्म इंद्राय यो नः प्रदिवो अपस्कः।
सुते सोमे स्तुमसि शंसदुक्थेंद्राय ब्रह्म वर्धनं यथासत्॥ ५

अस्मै। वयं। यत्। ववान। तत्। विविष्मः। इंद्राय। यः।
नः। प्रऽदिवः। अपः। करिति कः।
सुते। सोमे। स्तुमसि। शंसत्। उक्था। इंद्राय। ब्रह्म।
वर्धनं। यथा। असत्॥ ५

॥ अथ नवमी ॥

तं वः सखायः सं यथा सुतेषु सोमेभिरीं पृणता भोजमिन्द्रं ।
कुवित्तस्मा असति नो भराय न सुष्विमिन्द्रोऽवसे मृधाति ॥ ९

तं । वः । सखायः । सं । यथा । सुतेषु । सोमेभिः । ईं ।
पृणत । भोजं । इंद्रं ।
कुवित् । तस्मै । असति । नः । भराय । न । सुष्विं । इंद्रः ।
अवसे । मृधाति ॥ ९

हे सखायः स्तोतारो यो यूयं सोमेषु सुतेष्वभिषुतेषु सत्सु भोजं दातारं तमीमेतमिंद्रं सोमेभिः सोमैर्यथा कामं संपृणत । संपूरयत । तस्मा इंद्राय कुवित्सूपकरणं । कुविदिति बहुनामैतत् । असति । अस्तु । किमर्थं । नोऽस्माकं भराय भरणाय पोषणाय । इंद्रः सुष्विमभिषवणशीलं यजमानमवसे तर्पणाय न मृधाति । न बाधते ॥

॥ अथ दशमी ॥

एवेदिंद्रः सुते अस्तावि सोमे भरद्वाजेषु क्षयदिन्मघोनः ।
असद्यथा जरित्र उत सूरिरिंद्रो रायो विश्ववारस्य दाता ॥ १०

एव । इत् । इंद्रः । सुते । अस्तावि । सोमे । भरत्ऽवाजेषु ।
क्षयत् । इत् । मघोनः ।
असत् । यथा । जरित्रे । उत । सूरिः । इंद्रः । रायः ।
विश्वऽवारस्य । दाता ॥ १०

मघोनो धनवतो हविष्मतो यजमानस्य क्षयदीश्वर इंद्रः सोमे सुतेऽभिषुते सति भरद्वाजेषु भरद्वाजैः एवेदेवमस्तावि । स्तुतोऽभूत् । इंद्रो जरित्रे स्तोत्रे यथा

। अथ चतुर्थी ।

शचीवतस्ते पुरुशाक शाका गवामिव स्रुतयः संचरणीः ।

वत्सानां न तंतयस्त इंद्र दामन्वंतो अदामानः सुदामन् ॥ ४ ॥

शचीऽवतः । ते । पुरुऽशाक । शाकाः । गवांऽइव ।

स्रुतयः । संऽचरणीः ।

वत्सानां । न । तंतयः । ते । इंद्र । दामन्ऽवंतः ।

अदामानः । सुऽदामन् ॥ ४

हे पुरुशाक बहुकर्मन्निंद्र शचीवतः प्रज्ञावतस्ते त्वदीयाः शाकाः शक्तयः कर्माणि वा सर्वतः संचरंतीति शेषः । तत्र दृष्टांतः । गवामिव धेनूनां स्रुतयो मार्गा यथा संचरणीः सर्वत्र संचारिण्यो भवंति तद्वत् । अपि च वत्सानां न तंतयः । तंतिर्नाम दीर्घप्रसारिता रज्जुः । यस्यां नियतैर्विशाखदामभिर्बध्यंते वत्साः बध्यंते यया तंतयो बहूनां वत्सानां बंधका हे सुदामन् शोभनदानेंद्र तथा ते त्वदीयाः शाकाः दामन्वंतो बंधनवंतो बहूनां शत्रूणां बंधका अदामानः स्वयमन्यैरबद्धाः ॥

। अथ पंचमी ।

अन्यदद्य कर्वरमन्यदु श्वोऽसच्च सन्मुहुराचक्रिरिंद्रः ।

मित्रो नो अत्र वरुणश्च पूषार्यो वशस्य पर्येतास्ति ॥ ५

अन्यत् । अद्य । कर्वरं । अन्यत् । ऊं इति । श्वः । असत् ।

च । सत् । मुहुः । आऽचक्रिः । इंद्रः ।

मित्रः । नः । अत्र । वरुणः । च । पूषा । अर्यः । वशस्य ।

परिऽएता । अस्ति । ५

नहि। त्वा। शूरः। न। तुरः। न। धृष्णुः। न। त्वा।
योधः। मन्यमानः। युयोध।
इंद्र। नकिः। त्वा। प्रति। अस्ति। एषां। विश्वा।
जातानि। अभि। असि। तानि॥ ५

हे इंद्र त्वा त्वया सह शूरो विक्रांततमो नहि युयोध। न युध्यते। तथा तुरोऽन्येषां शत्रूणां हिंसकोऽसन्त्वया न युयोध। धृष्णुर्धर्षको न युयोध। मन्यमानो युद्धे क्रुध्यन् योधो भटस्त्वा त्वया न युयोध। हे इंद्र एषां शूरादीनां मध्ये कश्चन त्वा तव नकिः प्रत्यस्ति। प्रतिनिधिर्नास्ति। विश्वा विश्वानि जातानि प्रादुर्भूतानि तानि शूरादीनि त्वमभ्यसि। अभिभवसि॥

॥ इति चतुर्थस्य षष्ठे एकोनविंशो वर्गः॥

॥ अथ षष्ठी॥

स पत्यत उभयोर्नृम्णमयोर्यदी वेधसः समिथे हवंते।
वृत्रे वा महो नृवति क्षये वा व्यचस्वंता यदि वितंतसैते॥ ६

सः। पत्यते। उभयोः। नृम्णं। अयोः। यदि। वेधसः।
संऽइथे। हवंते।
वृत्रे। वा। महः। नृऽवति। क्षये। वा। व्यचस्वंता।
यदि। वितंतसैते इति॥ ६

उभयोरुभयोरुभयोर्मध्ये स जनो नृम्णं धनं पत्यते। ईष्टे। कयोर्मध्ये क ईष्ट इत्येतदुभयथाह। यदि यस्य जनस्य। यदीति निपातो यच्छब्दार्थे वर्तते। समिथे यज्ञे वेधसः कर्मणां विधातार ऋत्विजो हवंते इंद्रं स्तुवंति स ईष्ट इति संबंधः। महो महति प्रभूते वृत्रे वा निरोधे निमित्ते वा नृवति परिचारकमनुष्ययुक्ते क्षये वा गृहनिमित्ते वा। व्यचस्वंतौ यदि द्वौ जनौ। यदीति वाक्यार्थे वर्तते।

वितंतसैते वियुध्यते तस्योभय इति संबंधः॥ तसिकृपाव्ययकर्मणो विपूर्वाद्वितंतसैते इति भवति। यद्वा तंसयत इति धातुः कंड्वादिषु पठ्यते तस्मादिदं रूपमिति॥

॥ अथ सप्तमी॥

अध स्मा ते चर्षणयो यदेजानिंद्र त्रातोत भवा वरूता।

अस्माकासो ये नृतमासो अर्य इंद्र सूरयो दधिरे पुरो नः॥७

अध। स्म। ते। चर्षणयः। यत्। एजान्। इंद्र। त्राता।

उत। भव। वरूता।

अस्माकासः। ये। नृऽतमासः। अर्यः। इंद्र। सूरयः।

दधिरे। पुरः। नः॥७

अध अपि च हे इंद्र ते त्वदीयाश्चर्षणयः मनुष्या यद्यदैजान् एजेयुर्भीत्या कंपेयुः त्वं तेषां त्राता पालको भव। उतापि च वरूता संभक्ता भव। अस्माकासोऽस्मदीया नृतमासो नेतृतमा ये मनुष्या हे इंद्र त्वामर्योऽरयो। प्रापयितार इत्यर्थः। तेषां त्राता भव। हे इंद्र सूरयो ये स्तोतारो नोऽस्मान्पुरो दधिरे पुरस्कुर्वते तेषां च त्राता भवेति॥

साकमेधेषु माहेंद्र्यामिष्टाविंद्रस्य इत्यग्नौ याज्या। सूत्रितं च। अनु ते दायि मह इंद्रियाय विश्वकर्मन्हविषा वावृधानः। आ० २.१८.। इति॥ चतुर्थेऽहनि माध्ये निष्केवल्य एषैव सूक्तमुखीया। सूत्रितं च। अनु ते दायि मह इंद्रियाय वम्रे तु ते परि चराणि विद्वानिति द्वे। आ० ८.५.। इति॥

॥ सैषा सूक्तेऽष्टमी॥

अनु ते दायि मह इंद्रियाय सत्रा ते विश्वमनु वृत्रहत्ये।

अनु क्षत्रमनु सहो यजत्रेंद्र देवेभिरनु ते नृषह्ये॥८

अनु । ते । दायि । महे । इंद्रियाय । सत्रा । ते । विश्वं ।

अनु । वृत्रऽहत्ये ।

अनु । क्षत्रं । अनु । सहः । यजत्र । इंद्र । देवेभिः ।

अनु । ते । नृऽसह्ये ॥ ८

हे इंद्र महे महते ते तुभ्यमिंद्रियायैश्वर्यायैश्वर्यमनुदायि । अन्वदायि । अनुदीयते च । वृत्रहत्ये वृत्रवधे निमित्ते ते तुभ्यं विश्वं समस्तं सत्रा सत्यमनुदायि । कैः किमनुदायीति तदुभयमाह । येन विश्वं बिभर्ति तत्क्षत्रं बलमनुदायि । येन शत्रूनभिभवति तत् ऋजिषीष्टं सहो बलमनुदायि । हे यजत्र यजनीयेंद्र ते तुभ्यं नृषह्ये युद्धे देवेभिः सैन्यैरेतत्सर्वमनुदायि ॥

॥ अथ नवमी ॥

एवा नः स्पृधः समजा समत्स्विंद्र रारंधि मिथतीरदेवीः ।

विद्याम वस्तोरवसा गृणंतो भरद्वाजा उत त इंद्र नूनं ॥ ९

एव । नः । स्पृधः । सं । अज । समत्ऽसु । इंद्र । ररंधि ।

मिथतीः । अदेवीः ।

विद्याम । वस्तोः । अवसा । गृणंतः । भरत्ऽवाजाः । उत ।

ते । इंद्र । नूनं ॥ ९

हे इंद्र एवमेवं स्तुतस्त्वं नोऽस्मदीयाः स्पृधः शत्रुसेनाः समत्सु संग्रामेषु समज । शत्रुवधार्थं प्रेरय । किंच मिथतीर्हिंसतीरदेवीरासुरीः सेना ररंधि । अस्मदय वशीकुरु । वयमपि च हे इंद्र ते स्तुवंतस्त्वां स्तुवंतो भरद्वाजा यजमानपक्षाणेन कर्मणोपासकाः । निवासयितारं । नूनमद्य विद्याम । लभेमहि ॥

॥ इति चतुर्थस्य षष्ठे विंशो वर्गः ॥

श्रुधी न इंद्रेत्यष्टर्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैंद्रं। तथा चानुक्रम्यते। श्रुधि नोऽष्टावैंद्रं। विनियोगो लैंगिकः॥

॥ तत्र प्रथमा ॥

श्रुधी नं इंद्र ह्वयामसि त्वा महो वाजस्य सातौ वावृषाणाः।

सं यद्विशोऽयंत शूरसाता उग्रं नोऽवः पार्ये अहंन्दाः॥ १

श्रुधि। नः। इंद्र। ह्वयामसि। त्वा। महः। वाजस्य।

सातौ। ववृषाणाः।

सं। यत्। विशः। अयंत। शूरऽसातौ। उग्रं। नः।

अवः। पार्ये। अहंन्। दाः॥ १

हे इंद्र ववृषाणाः सोमैस्त्वां सिंचंतो वयं स्तोतारो महो महतो वाजस्यान्नस्य सातौ लाभार्थं त्वा त्वां हुवामसि। आह्वयामः। हे इंद्र त्वं नोऽस्माकं मदाह्वानं श्रुधि। शृणु। यद्यदा विशो जनाः शूरसाता शूरसातौ युद्धे समयंत संगच्छंते तदा पार्ये विशेषेण पारयितव्येऽहनि दिवसे नोऽस्मभ्यमुग्रमुद्गूर्णमवो रक्षणं दाः। अदाः। प्रयच्छ॥

॥ अथ द्वितीया ॥

त्वां वाजी हवते वाजिनेयो महो वाजस्य गध्यस्य सातौ।

त्वां वृत्रेष्विंद्र सत्पतिं तरुत्रं त्वां चष्टे मुष्टिहा गोषु युध्यन्॥ २

त्वां। वाजी। हवते। वाजिनेयः। महः। वाजस्य।

गध्यस्य। सातौ।

त्वां। वृत्रेषु। इंद्र। सत्ऽपतिं। तरुत्रं। त्वां। चष्टे।

मुष्टिऽहा। गोषु। युध्यन्॥ २

वाजी हविर्लक्षणान्नवान् वाजिन्याः पुत्रो भरद्वाजो हे इंद्र त्वां महतः सर्वैः प्राप्यस्य महतो महतो वाजस्य सातौ लाभे निमित्ते ह्वयते। ह्वयति। अपि च हे इंद्र सत्पतिं सज्जनानां पालकं सहत्वं दुर्जनानां मारकं त्वां वृत्रेषूपद्रवेषु निमित्तेषु भरद्वाजो ह्वयति। मुष्टिहा मुष्टियुद्धेन शत्रूणां हंता गोषु निमित्तभूतासु युध्यन् शत्रुभिः सह युद्धं कुर्वन् भरद्वाजस्त्वां चष्टे। पश्यति। प्रतिभाषते॥

॥ अथ तृतीया ॥

त्वं कविं चोदयोऽर्कसातौ त्वं कुत्साय शुष्णं दाशुषे वर्क्।

त्वं शिरो अमर्मणः पराहन्नतिथिग्वाय शंस्यं करिष्यन्॥ ३

त्वं। कविं। चोदयः। अर्कऽसातौ। त्वं। कुत्साय। शुष्णं। दाशुषे। वर्क्।

त्वं। शिरः। अमर्मणः। परा। अहन्। अतिथिऽग्वाय। शंस्यं। करिष्यन्॥ ३

हे इंद्र त्वमर्कसातावन्नलाभार्थं कविं भार्गवमृषिं चोदयः। अचोदयः। प्रेरय। किंच हे इंद्र त्वं दाशुषे हविर्दत्तवते कुत्साय शुष्णमसुरं वर्क्। छेदितवानसि वर्गिति वृजतेश्छेदनार्थस्य लुङि रूपं॥ तथा त्वमतिथिग्वायातिथीनामभिगंत्रे दिवोदासाय शंस्यं स्तुत्यं सुखं करिष्यन् अमर्मणो मर्महीनमात्मानं मन्यमानस्य शंबरस्य शिरः शीर्षं पराहन्। अवधीः॥

॥ अथ चतुर्थी ॥

त्वं रथं प्र भरो योधमृष्वमावो युध्यंतं वृषभं दशद्युं।

त्वं तुग्रं वेतसवे सचाहन्त्वं तुजिं गृणंतमिंद्र तूतोः॥ ४

त्वं। रथं। प्र। भरः। योधं। ऋष्वं। आवः। युध्यंतं।

वृषभं। दशऽद्युं।

त्वं। तुग्रं। वेतसवे। सचा। अहन्। त्वं। तुजिं। गृणंतं।

इंद्र। तूतोरिति तूतोः॥ ४

हे इंद्र त्वं वृषभसंज्ञकाय राज्ञे योधं युद्धसाधनमृष्वं महांतं रथं प्रभरः प्राभरः। अपि च युध्यंतं शत्रुभिः सह युद्धं कुर्वंतं दशद्युं दश दिवसा युध्यतो यस्य गतास्तं वृषभमेतदाख्यं राजानमावः। युद्धादपोपरक्षः। किंच त्वं वेतसव एतन्नाम्ने राज्ञे सचा सहायभूतः सन् तुग्रमसुरमहन्। हतवानसि। वेतसुनाम कश्चिदसुरः। अत्र तस्मादन्यः उच्यते। यद्वा वेतसव इति तृतीयार्थे चतुर्थी। वेतसुनामासुरेण सहितं तुग्रं हतवानसि। तथा च मंत्रांतरे श्रूयते। अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रंधयं। ऋग्वे० १०, ४९, ४,। इति। हे इंद्र त्वं गृणंतं स्तुवंतं तुजिमेतदाख्यं राजानं तूतोः। अवर्धयः॥

॥ अथ पंचमी ॥

त्वं तदुक्थमिंद्र बर्हणा कः प्र यच्छता सहस्रा शूर दर्षि।

अव गिरेर्दासं शंबरं हन्प्रावो दिवोदासं चित्राभिरूती॥ ५

त्वं। तत्। उक्थं। इंद्र। बर्हणा। कः। प्र।

यत्। शता। सहस्रा। शूर। दर्षि।

अव। गिरेः। दासं। शंबरं। हन्। प्र। आवः।

दिवःऽदासं। चित्राभिः। ऊती॥ ५

हे इंद्र बर्हणा बर्हणः शत्रूणां हिंसकस्त्वमुक्थं प्रशस्यं तत्कर्म कः। अकरोः। किं तत्कर्मेत्युच्यते। हे शूर वीरेंद्र त्वं शता शतानि सहस्राणि च शंबरसंबंधीन् भटान् प्रदर्षि। विदारितवानसि। तथा च निगमांतरे। अध्वर्यवो यः शतं शंबरस्य। ऋग्वे० २, १४, ६,। इति। तथा त्वं दासं यज्ञादिकर्मणामुपक्षपयितारं गिरेः पर्वतादवगतं शंबरमसुरमवहन्। अवावधीः। तथापि श्रूयते। यः शंबरं पर्वतेषु क्षियंतं। ऋग्वे० २, १२, ११,। इति। किंच चित्राभिर्विचित्राभिरूती ऊतिभी रक्षाभिर्दिवोदासं राजानं प्रावः। प्रकर्षेण पालयसि च॥

॥ इति चतुर्थस्य षष्ठे एकविंशो वर्गः॥

॥ अथ षष्ठी ॥

त्वं श्रद्धाभिर्मंदसानः सोमैर्दभीतये चुमुरिमिंद्र सिष्वप्।
त्वं रजिं पिठीनसे दशस्यन्षष्टिं सहस्रा शच्या सचाहन्॥ ६

त्वं। श्रद्धाभिः। मंदसानः। सोमैः। दभीतये। चुमुरिं।
इंद्र। सिष्वप्।
त्वं। रजिं। पिठीनसे। दशस्यन्। षष्टिं। सहस्रा।
शच्या। सचा। अहन्॥ ६

हे इंद्र श्रद्धाभिः श्रद्धापुरःसरमादरातिशयेनानुष्ठितैः कर्मभिर्मंदसानो मोद-मानः श्रद्धया नूनं कर्म सत्यमेव भवति। तथा च श्रूयते। यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति। छा० उ० १. १. १०. । इति। सोमैश्च मंदसानस्त्वं दभीतये एतन्नामकाय राजर्षये चुमुरिमेतदाख्यमसुरं सिष्वप्। अस्वापयः। अवधीरित्यर्थः। किंच हे इंद्र त्वं पिठीनसे एतन्नामकाय रजिमेतदाख्यां कन्यां वा राज्यं वा दशस्यन् प्रयच्छन् शच्या प्रज्ञया षष्टिं षष्टिसंख्याकानि सहस्रा घटानां सहस्राणि सचा सह युगपदेवाहन्। अवधीः॥

॥ अथ सप्तमी ॥

अहं चन तत्सूरिभिरानश्यां तव ज्याय इंद्र सुम्नमोजः।
त्वया यत्स्तवंते सधवीर वीरास्त्रिवरूथेन नहुषा शविष्ठ॥ ७

अहं। चन। तत्। सूरिऽभिः। आनश्यां। तव। ज्यायः।
इंद्र। सुम्नं। ओजः।
त्वया। यत्। स्तवंते। सधऽवीर। वीराः। त्रिऽवरूथेन।
नहुषा। शविष्ठ॥ ७

